श्रीमद्वेदान्तदेशिकस्तोत्राणि—१

# ॥ भगवद्ध्यानसोपानम् ॥

भागवताङ्घ्रिरेणुना
अन्बिल् वेङ्कटगोपालदासेन विरचितया
व्याख्यया सहितम् ।



श्रीरङ्गस्थ
श्रीवाणीविलासमुद्रायन्त्रालये
संमुद्रितम् ।
. . या । २७.
पात्र



॥ श्रीः ॥

# ॥ श्रीमद्वेदान्तदेशिकस्तोत्राणि ॥

## भगवद्ध्यानसोपानव्याख्या ।



श्रीनिवासं परं ब्रह्म तन्नाम्नश्च गुरूत्तमान् ।
वन्दे भागवतान्सर्वान्देशिकाशयलब्धये ॥

व्यङ्ग्यप्रधाना गम्भीरा निगमान्तगुरोर्गिरः ।
दर्शयन्तु प्रसादेन कृत्स्नं स्वं भावमञ्जसा ॥

श्रीमदाचार्यस्तोत्राणि व्याख्यातपूर्वाणि प्रौढैर्विद्वद्भिः । पूर्वव्याख्यानानि सर्वाणि सादरं सबहुमानं कात्स्न्र्येन उपादेयानि । तत्र ये भावाः प्रतिपादिताः यानि च प्रमाणान्युदाहृतानि पुनरुक्तिभयाद्विस्[illegible] च न[illegible]णामत्र पुनर्लेखनम् । यद्यत्र विज्ञा-

ख्यमानेषु भावेषु सन्ति कियन्तोऽपि ग्राह्यांशाः पूर्वव्याख्याभिरागमन्यायेन समुच्चेतव्या इति सविनयमभ्यर्थ्यते ।

भगवद्ध्यानसोपानमित्यस्य स्तोत्रस्य कविभिः कृता संज्ञा । प्रायेणान्येषां स्तोत्राणां तत्तद्विषयभूतार्चाविभवमूर्तीनां नाम्नैव संज्ञाः कृताः । मूर्तिविशेषविषयिण्या अस्याः स्तुतेः सामान्येन भगवच्छब्देन संज्ञाकरणं श्रीमद्रङ्गनाथे असाधारण्येन भगवच्छब्दव्यपदेश्यतां द्योतयतीति तन्मूर्त्यभिमानिभिर्वक्ष्येत । तथैव च दयाशतकमिति मूर्तिविशेषगुणविशेषविषयस्य स्तोत्रस्य मूर्तिमनिर्दिश्यैव गुणमात्रेण संज्ञाकरणं तन्मूर्तेरेवासाधारण्येन दयावत्त्वं सूचयेत् । तथैव न्यासदशकम्, न्यासविंशतिरिति निर्विशेषा संज्ञा श्रीमत्प्रणतार्तिहरविषये । असाधारण्येन खलु व्यपदेशा भवन्ति ॥

"कारणं तु ध्येयः" इति श्रुतिः । प्रकृतिः कारणमित्यनर्थान्तरम् । ध्यानस्य कारणविषयत्वस्यौचित्यात्, अर्चासु प्रकृतिभूतमूर्तिविषये साङ्गध्याननिरूपणं न्याय्यमित्याचार्या अभिप्रयन्तीव । योगारोहपर्वक्रमप्रदर्शिकेयं स्तुतिः । यद्यपि 'अन्योन्तर आत्मा, अन्योन्तर आत्मा' इति मूषानिषिक्तद्रुतताम्रवदन्तरन्तः कोशपरंपरानिरूपणे, अन्तरन्तरवतरणेनान्तरतमब्रह्मप्राप्तिः प्रदर्श्यते, अत्र प्रज्ञाप्रासादस्य योगभूमेरारोहो वर्ण्यते । योगारूढ इति भगवत्प्रयोगः । अत्राप्यारुरुक्षोरिति कविभिरारोहः प्रादिदर्शयिषित इति स्पष्टम् ।

'आरोहतु दुरारोहं समाधिगगनस्थलम्' इत्याचार्याः सङ्कल्पसूर्योदये । अक्लेशेन चारोहः सर्वैरीप्स्येत । अत्रापि तथैवेप्सा इति स्पष्टमुच्यते । यदि श्रीवेङ्कटनायको वा श्रीहस्त्यद्रिनाथो वा ध्यानारोहप्राप्यत्वेन वर्ण्येत, ध्रुवं तत्रारोहश्रम अधिकः स्यात् । तन्निवासभूतगिर्यारोहस्तत्राधिक एव । यद्यपि तन्मूर्तिद्वयमपि प्रकृतिभूतं गिर्यारोहश्रमलघूकरणार्थं रङ्गास्थाननिवासिविषयं ध्यानारोहप्रणयनमुचितमेव । श्रीभाष्यकारैर्गद्येषु श्रीरङ्गनाथविषयमात्रगद्यनिबन्धनमिति यत्, यच्चाचार्यैः प्रधानदिव्यक्षेत्रपरिगणने श्रीरङ्गस्यैव नियमेन प्रथमनिर्देशः क्रियते संकल्पसूर्योदयादिग्रन्थेषु, यच्च तद्विषयैव गाथा प्रथमं पठ्यते स्थानविशेषाधिकारनिगमने, न तावता कुत्राप्याद्यस्वयंव्यक्तमूर्तौ मनागपि वैषम्यमुद्भावयामः । इतरत्रारोहश्रमाधिक्येनैव योगालम्बनवरणमुपपादितं स्यात् । एतदेव 'सुलभमिह' इत्युपक्रमश्लोके आचार्यैर्व्यज्यत इव ।

'आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम्' इति कुमारसंभवे यदुक्तं कविसार्वभौमैः श्रीगौरीविग्रहैकदेशभूतवलित्रयवर्णने, ध्यानसोपानमिति संज्ञाकरणे तदेव मूलं स्यादिति भाति । एतदपि भगवद्विषयकामस्य सोपानमेव । ध्यानं च निरन्तरोत्कटकाम एव । स च भावः प्रोषितप्राणनाथायाः पतिव्रतायाः कान्तविषयभावस्य परमसाम्यापन्न इति सर्ववेदान्तिसंप्रतिपन्नम् । तथा च श्रीमच्छंकराचार्याः—'ध्यायति प्रोषितनाथा पतिमिति या निरन्तरस्मरणा पतिं प्रति

सोत्कण्ठा सैवमभिधीयते' इति आवृत्त्यधिकरणभाष्ये । यदि च परमहंसपरिव्राजकैरप्येवं तीव्रकामत्ववर्णनं भक्तेः, किमपरमपेक्ष्येतास्मिन्विषये प्रमाणतया । महायोगिनां श्रीशुकपराङ्कुशपरकालादीनामेवमेवानुभवोऽभूदिति सुप्रसिद्धमेव । 'अन्यत्र भीष्माद्गाङ्गेयादन्यत्र च हनूमतः' इति श्लोके, इन्द्रियनिग्रहे हनुमत्समत्वेन वा, अर्वाचीनत्वेऽपि तत्पूर्वपठितत्वेन ततोऽप्यधिकत्वेन वा परिगणितः कुरुवृद्धो भगवान्भीष्मस्त्रिभुवनकमनीयभगवद्विग्रहलावण्याकृष्टस्तत्र रतिमेव प्रार्थयते 'रतिरस्तु मेऽनवद्या' इति । भगवानाञ्जनेयोऽपि 'रामः कमलपत्राक्षः सर्वसत्त्वमनोहरः' इत्यादिना पुंसां दृष्टिचित्तापहारिभगवद्विग्रहलावण्यसागरे आत्मनो निमग्नतां ख्यापयति तत्पत्नीसंनिधौ । कामस्य सोपानमित्यत्र कामशब्देन मन्मथो वा मान्मथः शृङ्गारभावो वा अभिप्रेतः स्यात् । चरमोऽर्थ एव उचिततरः । तत्र विग्रहैकदेशस्य वलित्रयस्य चारुत्वात्सोपानत्वं रूपितम् । आचार्यैस्तु सर्वाङ्गसुन्दरस्य भगवतो विग्रहं कृत्स्नमपि ध्यानारोहसोपानत्वेन अतिसुन्दरं वर्ण्यते । भगवद्विग्रहविषययोगदृष्टिवैशद्यसाधने यथा भगवन्मूर्तिरेवाञ्जनं भवति, तथा तस्या एव तद्विषययोगारोहसोपानत्वरूपणं न्याय्यमेव स्यात् । अनन्यभावेनापादचूडमनुभूतस्य दिव्यविग्रहस्य दिव्यात्मस्वरूपसाक्षात्कारसमर्थदिव्यदृष्टिसाधकत्वं सर्वसंमतम् । प्रणिहितधियां योगारूढावस्थामारुरुक्षोः अत्रोपदिष्टक्रमेण तत्तदवयवसौन्दर्याद्यतिशयानुभवे

अतिशयेन रञ्जितं चित्तमैकाग्र्येण भगवति लग्नं स्यात् । अलौकिकाद्भुतसौन्दर्यानुभवेन स्वरसतो वस्तुन्यक्लेशेन चित्तलयः संपद्येत पटुप्रत्याहारप्रभृतिपुटपाकक्लेशायासं विना । अक्लेशेन खलु योगारोहः सिषाधयिषित इति स्पष्टं निगद्यते आचार्यैरन्त्यश्लोके । सौन्दर्यानुभवः, तद्द्वारा चित्तलयश्च, सुलभः सुभगश्चोपायो योगसिद्धौ । यथा भगवद्विषयगानरसानुभवस्तस्मिंश्चित्तलयस्य क्लेशरहितमार्ग इति 'वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः । तालज्ञश्चाप्रयासेन मोक्षमार्गं निगच्छति ॥' इति श्लोकेन प्रदर्श्यते तद्वदेव सौन्दर्यानुभवद्वारो लयः सुलभः स्यात् । तत्र गानरञ्जितश्रोत्रद्वारा मनोलयः अत्र रञ्जितचक्षुर्द्वारा तल्लय इत्येव विशेषः । प्राकृतसुन्दरीविषयेऽपि खलु 'लीनेव प्रतिबिम्बितेव' इत्यादि बहु वर्णयन्ति । तत्र को वा क्लेशोऽनुभूयमानविषयैकीभावे । न केवलं क्लेशरहिता उपायदशा, परं तूपक्रमक्षणादतिशयितसुखरूपा । अत एव 'निदिध्यासितव्यः' इति सन्विशिष्टध्यानविधिप्रयोगः । वर्ण्यमानतत्तदवयवस्य लोकोत्तरसौन्दर्यं प्रतिश्लोकं चित्तरञ्जकतया प्राधान्येन यथानुभवं प्रदर्श्यते आचार्यैः । हंसजुष्टकनकसरित्सिकताप्रादुर्भूतत्वेनापूर्वपरिमलवत्त्वेन देवीकरसरसिजलालितत्वेन स्वच्छचित्तादर्शप्रतिफलितत्वेन पादाम्भोजवर्णनं, चारुवृत्तानुपूर्वत्वेन, कान्तिलीलाकलाचित्वेन जानुच्छायाद्विगुणसुभगत्वेन जङ्घावर्णनम्, कामारामस्थिरकदलिकात्वेन कमलाभूमिनीलोपधानत्वेन लाव-

ण्यौघत्वेन च ऊरुवर्णनम्, रम्यावर्तद्युतित्वेन नाभिवर्णनम्, श्रीवत्सकौस्तुभालंकृतत्वेन श्रीपदन्यासधन्यत्वेन वक्षस्थलवर्णनम्, लीलोपहितत्वेनाजानुलम्बित्वेन बाहुद्वयवर्णनम्, साभिप्रायस्मितविकसितत्वेन चारुबिम्बाधरोष्ठत्वेन कान्तत्वेन कनकतिलकालंकृतत्वेन स्वागतोदारनेत्रत्वेन वक्त्रवर्णनम्, अन्तःस्थिरपरिमलवल्लुभास्पर्शमान्यमाल्यैर्वासितत्वेन कुप्यच्चोलीवचनकुटिलत्वेन मौलिबन्धवर्णनं च, उपासकचित्तस्य बलात्सुखेन चाकर्षणे भगवद्विग्रहस्य सामर्थ्यं प्रदर्शयन्तीव । उपासकचित्तरञ्जकगम्भीरमधुरान्तरगुणगणवर्णनमप्यत्र भूयसा क्रियते चित्तलयाय ।

श्रीरङ्गनाथस्याष्टाङ्गयोगविषयत्वं सुतरां संगच्छेत । प्रणवजपेन तदर्थभावनेन चाक्लेशेन योगसिद्धिर्भवतीति भगवता पतञ्जलिना स्पष्टं सूत्र्यते । 'ईश्वरप्रणिधानाद्वा' 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' 'तस्य वाचकः प्रणवः' 'तज्जपस्तदर्थभावनम्' 'समाधिसिद्धिरीश्वरप्रणिधानात्' इति खलु पारमर्षाणि सूत्राणि । 'तीव्रसंवेगानामासन्नः' इति सूत्रेण संपूर्णवैराग्याणां दवीयसी योगसिद्धिरित्यभ्यधायि । वैराग्यवतोऽधिकारिणः उत्तरसूत्रेण मृदुतीव्रो मध्यतीव्र अधिमात्रतीव्र इति त्रेधा विभज्य तेषामुत्तरोत्तरं सिद्धिशैघ्र्यं च कथयित्वा, तदनन्तरं तीव्रवैराग्यसंपादनाशक्तानाम् 'ईश्वरप्रणिधानाद्वा' इति सुकरोपायमुपदिशति सूत्रकारः । 'किमेतस्मादेवासन्नतमः समाधिर्भवति । अथास्य लाभे भवत्यन्योऽपि कश्चिदुपायो न

वेति' एतत्सूत्रमवतार्य, 'प्रणिधानाद्भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण । तदभिध्यानमात्रादपि योगिन आसन्नतमः समाधिलाभः समाधिफलं च भवतीति' व्यासभाष्ये एतत्सूत्रं व्याख्यातम् । योगिनः प्रणवं जपतः प्रणवार्थं च भावयतश्चित्तमेकाग्रं संपद्यते । तथा चोक्तम् 'स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत् । स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते ॥' इति । स्वाध्यायशब्दः प्रणवपरत्वेन व्याख्यातः । श्रीरङ्गविमानस्य प्रणवाकारत्वं प्रणवतुल्यत्वं च सुप्रसिद्धम् । वाच्यस्य वाचकान्तस्थत्वं बहुलं व्यवह्रियते । श्रीरङ्गान्तस्थभगवान्प्रणवान्तस्थ एव । तथैव स्पष्टं निगद्यते आचार्यैस्तद्विषयद्राविडगाथायाम् । योगमारुरुक्षूणां प्रणवान्तस्थेश्वरभावनं खल्वासन्नतमोपायत्वेन सूत्रितम् । श्रीरङ्गविमानान्तस्थमूर्तिविषयकप्रणिधानं प्रणवान्तस्थेश्वरप्रणिधानाभिन्नत्वाद्योगं काङ्क्षमाणानां यमिनां सुलभोपायत्वेनोपादेयतमं भवति । अत एव 'अन्तर्ज्योतिः किमपि यमिनाम्' 'दृश्यते रङ्गमध्ये' इत्युपक्रम्यते । यद्यमिभिर्हृदयेऽन्विष्यते, अपरोक्षीक्रियते च तदेव प्रणवभूतरङ्गमध्ये दृश्यत इत्युभयोरभेदः प्रतिज्ञायते । श्रीरङ्गनाथविषये न हार्दार्चयोर्भेद इति व्यज्यते । 'योगिनां हृदये हरिः' 'प्रतिमास्वप्रबुद्धानाम्' इति भेदो नात्र । यदेव योगिनां हृदये दृश्यते प्रणवजपेन तदन्तस्थभावनेन च तदेव घनीभूतकरुणारसौघभरितत्वादवतीर्णं योग्ययोगिसाधारण्येन रङ्गान्तर्दृश्यते । इदमेवायोगिनामपि दृश्यत्वम् 'यमिनामन्तर्ज्यो-

तिर्नः सुलभम्' इति नः-शब्देन व्यज्यते । उपसंहारे च 'मध्ये रङ्गं मम च हृदये वर्तते सावरोधः' इत्येतदेव विग्रहद्वयैक्यं ध्यानफलतयानुभूयते । उपक्रमे योगिहृदयान्तर्ज्योतिरुद्दिश्य तस्य रङ्गमध्यदृश्यत्वविधानम् । उपसंहारे तु प्रथमं रङ्गमध्ये दृष्टस्य ज्योतिषः पश्चात्तद्विषयभावनया प्रणिहितधीत्वावस्थामारूढेनारोहसमकालमेव हृदयसाक्षात्कृतत्वेन बोधनम् । अत एवोपसंहारे 'मध्ये रङ्गम्' इति प्रथमं निर्दिश्यानन्तरं 'मम च हृदये वर्तते' इत्यभिधीयते । प्रणवान्तरस्थत्वं च एतन्मूर्तेर्योगालम्बनत्वेन वरणे निमित्तम् ॥

योगाङ्गसमसंख्याकैरष्टभिः श्लोकैर्योगसोपानपर्वभूतभगवदवयववर्णनं क्रियते । तत्तच्छ्लोके यथासंख्यं यथासंभवं तत्तद्योगाङ्गव्यञ्जकत्वं तत्र तत्र प्रदर्शयिष्यते । मौलिबन्धवर्णनश्लोके 'स्थितिमधिगता वृत्तयश्चेतसो मे' इति चित्तवृत्तिनिरोधलक्षणसमाधेः स्पष्टं संग्रह इति रसिकमनःसाक्षिकमेव स्यात् । 'प्रणिहितधियाम्' इति च सौत्रप्रणिधानं प्रत्यभिज्ञाप्यते ।

उपनिषत्सु बहुश ओंकारालम्बनब्रह्मण उपासनं विधीयते । यथा प्रश्नोपनिषदि 'यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत... स... परात्परं पुरिशयं पुरुषमीक्षते' इति । मुण्डके च 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।' इति । यदि प्रणवरूपधनुष्येव लक्ष्यमन्तर्गतं

स्याद्यथा श्रीरङ्गे, शरप्रक्षेपरूपप्रयासोऽपि न स्यात्करधृतधनुर्मतत्वाल्लक्ष्यरूपफलस्य। माण्डूक्यं च 'ओमित्येतदक्षरमिदं सर्वं तस्य उपव्याख्यानम्' इत्युपक्रम्य 'एवमोंकार आत्मैव' इत्युपसंह्रियते। तच्च कृत्स्नमोंकारवर्णनपरमेव। तैत्तिरीये च 'ब्रह्मणः कोशोऽसि' इत्योंकारः परमात्मनो निधानस्थानत्वेन वर्ण्यते।

अभिनवदशावतारभूता योगित्वेन प्रसिद्धाः श्रीशठकोपपरकालादयः सर्वेऽप्यमुमर्चामूर्तिं ध्येयत्वेनानुभवन्ति। तच्च सर्वयोग्यनुभूतत्वमन्यत्कारणं स्यात्। यदि भूयसामेव बलीयस्त्वम्, किं वाच्यं सर्वेषामैककण्ठ्ये।

मुनिवाहन इति प्रसिद्धो योगी यद्यपि मध्ये मध्ये श्रीमद्वेङ्कटनायकमप्यनुभवति श्रीरङ्गनाथमेवार्चाभूमानमैकान्त्येन निश्चित्य भूमविद्योक्तानुभवप्रकारेण सर्वेतरविषयाद्रष्टृतां नयनयोः प्रतिजज्ञे। स च श्रीरङ्गनाथेन मदीय इति विशिष्याभ्यमानि। तस्य च नामकरणं कृतं तेन यथा आचार्याणाम्। तत्प्रणीतगाथानामेव व्याख्या कृता आचार्यैः। नामकर्तृत्वरूपपितृत्वरूपसंबन्ध उभयोः समः श्रीरङ्गनाथस्य। तद्गाथासंख्याप्याद्रियतेऽत्र भगवन्मूर्तविग्रहवर्णने।

यद्यप्याचार्याः प्रपत्तिनिष्ठास्ते संपूर्णयोगानुभववन्त इति तद्ग्रन्थेभ्यः स्पष्टमवगम्यते। संकल्पसूर्योदये प्रथमाङ्के श्रीमन्नारायणे श्रुतीनां समन्वयः प्रदर्श्यते। द्वितीयाङ्के प्रथमोक्त-

समन्वयस्य बाधप्रतिरोधनिरसनं क्रियते । अनन्तरमष्टभिरङ्कैः साधनसाध्यनिरूपणम् । तत्राप्यष्टसंख्यैवादृता, योगसंख्यात्वात् । अत्यन्तवैपुल्येन भजनसुखमन्वभाव्याचार्यैरिति सुविशदमेव नवमदशमाङ्कपरिचयवतां रसिकानाम् । 'त्रिभुवनमिदं शान्तक्षोभं समाधिरनाकुला प्रसृमरसुधाधाराकारा प्रसीदति शेमुषी ।' 'चिन्ता च द्रुतशर्कराप्रतिनिधिः शीताश्रुणी लोचने' 'स्वतः सिद्धस्वच्छस्थिरमधुरचिन्तासुरसरित्प्रवाहोपश्लिष्टात्प्रणिधिमुखभागादवतरन् । चिदानन्दोदन्वत्यनघगुणरत्नौघसुभगे निमज्जत्यन्यस्मिन्नयमपुनरुन्मज्जनमिह ॥' इत्यादिभिर्भूयः स्वानुभव आवेद्यते । "तवाविर्भूयासुर्मनसि मुनिसिद्धादिसुलभाः । मधुक्षीरन्यायस्वगुणविभवास्यञ्जनकनन्महानन्दब्रह्मानुभवपरीवाहा बहुविधाः ॥" इति खलु गुरुर्लक्ष्मणयोगी शिष्यं स्वात्मानमनुगृह्णाति द्वितीयाङ्के । 'परभक्तिपरज्ञानपरमभक्त्येकस्वभावं मां कुरु' इति खलु गद्ये प्रार्थना । 'भगवन्भक्तिमपि प्रयच्छ मे' इति अपि-शब्देन प्रपन्नत्वेऽपि भक्तिरपि याच्यते ।

यद्यप्याचार्यैः समाधिजन्यानुभवस्य मुक्तानन्दादत्यन्तमवरत्वं वर्ण्यतेऽधिकरणसारावल्याम् 'प्रायः स्वस्मिन्स्वदेहिन्यनघगुणविधौ तद्विभूतिद्वये वा दृष्टं यत्स्यात्समाधौ भवति पृषतवत्तद्धि मुक्तानुभूतेः ।' इति, यद्यपि पृथुगद्यभाष्ये 'परिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवः' इत्यस्य व्याख्याने 'कंचित्कालं निरन्तरत्वेऽपि सारस्वतस्रोतो-

न्यायेन विच्छिन्नप्रवाहत्वम्, सामान्यतः सर्वविषयत्वे परोक्षरूपत्वम्, सावधिकरसत्वम, निःशेषनिवृत्तप्रतिबन्धापेक्षया' इत्यादिना न्यूनत्वं वर्णितम्, यद्यपि 'देहयोगाद्वा सोऽपि' इति सूत्रन्यायेन देहयोगनान्तरीयकतिरोधानेन कात्स्न्येन स्वरूपाभिव्यक्तिरूपमोक्षानन्दः शरीरमोक्षात्प्राग्दुष्प्राप इत्येव युक्तियुक्तम्, तथापि देहवद्भिरनुभूयमानेष्वानन्देषु समाध्यनुभूयमानभगवद्योगानन्दोऽत्यन्तविपुलो निःसमाभ्यधिकश्चेत्यभिप्रेत्य 'कश्चित्समाधिकदरिद्रः समाधिराधातव्यः,' 'भजनसुखमत्यन्तविपुलम्' 'स्वफलेन तुलारूढः समाधिर्मुक्तिसाधकः । न्यूनाधिकसमत्वेषु विकल्पायैव कल्पते ॥' 'फलार्थं तत्किं वा फलमिति वितर्कः श्रमफलः ।' 'मुनिर्मुक्तिद्वारं मुरमथनधीसंततिसुधानिधिप्रादुर्भावं भजति पुरुषः सत्त्वमनघम् ।' 'द्रवप्रवरशर्कराभरितदुग्धधाराकृतिः प्रतिक्षणविकल्पनाकलहलाञ्छिनी वर्तते ।' इत्यादिभिराचार्यैः समाधिजानुभवस्य निरतिशयसुखत्वं वर्ण्यते । देहवतां यो निरतिशयानन्दः स योगसाध्य इति तात्पर्यम् ॥

अस्मदादिप्रत्यक्षं द्वेधा विभज्यते न्यायपरिशुद्धौ योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति । 'योगिप्रत्यक्षं प्रकृष्टादृष्टविशेषजम्, दिव्यं प्रमाणमिति व्यवह्रियते पूर्वाचार्यैः, तच्चादिव्येन्द्रियानपेक्षम्, 'दिव्यं ददामि ते चक्षुः' इति भगवदनुगृहीतदिव्यचक्षुरपेक्षम्, न भावनाबलमात्रजम्,' इति च तत्रोक्तम् । 'अस्ति च योगिप्रत्यक्षमदृष्टविशेषसहकृतान्तःकरण-

जन्यमागमाधिगम्यमास्तिकानाम् । श्रूयते हि रामायणे 'तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यसि' इति । 'योगिप्रत्यक्षं फलमात्रमित्यस्मन्मतम्' इति च शतदूषण्यामुक्तमाचार्यैः । सर्वथा योगिप्रत्यक्षमभिमतमेवास्माकम् ।

वैश्वानरविद्यायां विश्वस्यापि प्रपञ्चस्य भुवनान्तर्यामिणो ब्रह्मणो विग्रहत्वेनोपवर्णनं कृतम् । तत्र स्वर्लोकादित्यवाताम्बरसलिलमहीरूपाः विश्वैकदेशा यथासंख्यं ब्रह्मणो मूर्धचक्षुः प्राणसंदेहवस्तिपादत्वेन कल्पिताः । एकैकावयवमात्रोपासने उपासकस्य तत्तत्स्वावयवहानिरूपानर्थ आपद्येतेत्युच्यते । सर्वविशिष्टोपासनेनैव फलप्राप्तिरित्यप्युच्यते । तत्क्रतुन्यायमप्युल्लङ्घ्य योऽवयव उपासनगोचरस्तस्यैवोपासकशरीरे विनाभाव आपाद्यते, उपासनस्याकृत्स्नत्वादुपासनस्वरूपस्यैवासिद्धेः, शास्त्रीयाविकलोपासनविषयत्वाच्च न्यायस्य ।

'यद्यत्पश्यामि ते गात्रं पूर्णेन्दुसदृशानने । तत्र तत्रैव सुश्रोणि चक्षुर्मम निबध्यते ॥' इति परमकामुकेन विंशतिचक्षुष्मता दशमुखेन प्रदर्शितरीत्यालोकातिशायिसौन्दर्यवत्त्वाद्दिव्यविग्रहस्य एकैकस्मिन्नेवावयवे पर्यवसितत्वमवयवान्तरभावनासामर्थ्यं च भावनाया नियतमापतेत् । तत्कथं संपूर्णविग्रहभावना संपद्येत । आपीठान्मौलिपर्यन्तं पुरुषोत्तमं पश्यतः खलु कुवासनादिनिरासः संभवेत् । अत्र रसिकसार्वभौमैः श्रीपराशरभट्टार्यैश्चतुर उपायः प्रदर्शितो भगवतो रङ्गनाथस्य

प्रत्यङ्गपूर्णसुषमासुभगवपुषः कार्त्स्न्येनानुभवे । "एकैकस्मिन्परमवयवेऽनन्तसौन्दर्यमग्नं सर्वं द्रक्ष्ये कथमिति मुधा मा मथा मन्दचक्षुः । त्वां सौभ्रात्रव्यतिकरकरं रङ्गराजाङ्गकानां तल्लावण्यं परिणमयिता विश्वपारीणवृत्तिम् ॥' इति । स एवोपायश्चारु प्रदर्श्यते आचार्यैरस्मिन्ध्यानस्तोत्रे । पर्वक्रमेण पूर्वपूर्वावयवानुभवकाल एवोत्तरावयवस्यानुभवगोचरता प्रत्यवयवं वर्ण्यते । कटकरुचिभिरिति पादजङ्घासंधिशोभिकटककान्तिभिः पादानुभवकाल एव जङ्घा ईषदनुभवगोचरा भवति, ततस्तद्दिदृक्षा जायते । एवं जानुच्छायाद्विगुणसुभगामित्यूरुजङ्घयोः संधिभूतजानुकान्त्यनुभववर्णनम्, न्यञ्चत्काञ्चीकिरणरुचिभिरित्यूर्वोरुपरि शोभमानकाञ्चीकिरणानुभववर्णनम्, मध्यं बाह्वोरिति वक्षःस्थलनिर्देशः, लीलोपहितमिति भुजवर्णनं च, उपर्युपर्यारुरुक्षासंभवसौकर्यं चारु समर्थयन्तीति रसिकैर्विभाव्यम् ।

सोपानक्लृप्तौ कोऽन्यो वेङ्कटेशात्कुशलतरः स्यात् । 'वेङ्कटेशेन क्लृप्तम्' इति निगमनश्लोके । 'वेङ्कटेशावतारोऽयम्' इति श्रीवेङ्कटेशो वा भवतु, बुधजनैरुपपत्तिभूम्ना उत्प्रेक्षितरीत्या पद्मापतेः परिचारविधौ प्रयुक्तघण्टाया अवतारो वा भवत्वाचार्यः । उभयथापि तस्य सोपानकल्पनकौशले न कोऽपि संशयीत । श्रीवेङ्कटाद्रिसोपानपङ्क्तेरपि गरीयसी सोपानपङ्क्तिः कुत्र वा दृश्येत । यदि वेङ्कटेशघण्टांश आचार्यः, नाद-

विषयेऽपि निरतिशयं कौशलं स्यात् । तच्च योगस्योपयुक्ततरम् । अनुभूयते च तत्कौशलं नादपद्धतौ ।

‘कायवाग्बुद्धिविषया ये मलाः समवस्थिताः । चिकित्सालक्षणध्यानशास्त्रैस्तेषां विशुद्धयः ॥’ इति वाक्यपदीये । शेषावतारभूतो महाभाष्यकर्ता भगवान्पतञ्जलिरेव योगसूत्रप्रणेता चिकित्साशास्त्रकर्ता चेति प्राचीननिबन्धनकाराणामभिप्रायः । ‘मृदुं तृणमथक्षणं शिरसि यद्वहन्वक्ति तद्विवादविषये नृणां भवति साधु निर्णायकम् । भुवं सविपिनां सदा शिरसि संवहन्वक्त्यहो प्रभुः पवनपायिनां श्वसिति कः पुनः संशयः ॥’ इत्यतिसुन्दरमुक्तं शेष एव योगप्रणेता इति । यदि शेषस्य वचन एव तादृशी श्रद्धा स्यात्, कीदृशी श्रद्धा स्यात्तस्य स्वात्मनो भगवत्पर्यङ्कीकरणरूपानुष्ठाने यथा श्रीरङ्गे पश्यामः । योगसूत्रप्रदर्शितसमाधेः श्रीरङ्गनाथो भूमिरिति स्वानुष्ठानेन प्रदर्शयति शास्त्रप्रणेता शेषः । यद्यपि शेष एव निवासस्थानं श्रीमद्वेङ्कटनायकस्यापि, तत्र गिरिमेव पश्यामः । तस्य शेषत्वम् ‘विष्णोर्वासादवनिवहनाद्धूद्धरत्वैः शिरोभिः’ इत्यादिहेतुभिरुन्नेयं खलु ॥

सल्लयरूपसुषुप्तिः सन्निकृष्टा योगावस्थायाः । योगनिद्रया शयानो देवः उचितो विषयः स्याद्योगभावनायाः ।

अन्तर्ज्योतिः किमपि यमिनामञ्जनं योगदृष्टे-
श्चिन्तारत्नं सुलभमिह नः सिद्धिमोक्षानुरूपम् ।

दीनानाथव्यसनशमनं दैवतं दैवतानां
दिव्यं चक्षुः श्रुतिपरिषदां दृश्यते रङ्गमध्ये ॥

अन्तर्ज्योतिः किमपि यमिनाम् ।[1] 'अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयो वीतरागाः' 'हृद्यन्तर्ज्योतिः' 'भारूपः सर्वगन्धः सर्वरसः एष म आत्मान्तर्हृदये, 'इदं वाव तद्यदिदमन्तः पुरुषे ज्योतिः' इत्यादिश्रुतयः, 'अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते' आत्मारामाविहितरतयो निर्विकल्पे समाधौ सत्वोद्रेकाद्विघटितत-मोग्रन्थयः सत्त्वनिष्ठाः । यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम् ॥' इत्यादिमहाकविवचांसि च प्रत्यभिज्ञाप्यन्ते ।

वाङ्मनसातीतं चक्षुराद्यगोचरं सर्वान्तरं योगिहृद्ध्यानगम्यं प्रत्यग्ज्योतिः भगवत्करुणापरिणामविशेषान्निखिलभूतनिशाम्यतया रङ्गमध्ये बहिर्दृश्यते । द्रष्टृ दृश्यते । दृक् दृश्यते । य आत्मा सर्वान्तरः स साक्षादपरोक्षाद्भवति । यत्तद्रेश्यमग्राह्यं तदेव वयं धीरा अधीराः सर्वेऽप्यत्र परिपश्यामः । 'सत्वोद्रेकप्रसमप्रनन्दथुभुवः सालम्बनध्यानतः शुद्धे चेतसि यद्यपि प्रभुरिहादृश्यो दरीदृश्यते ।' इत्याचार्याः । प्रभूणां दृश्यत्वं दुर्लभमेव । अयं प्रभुः वस्तुस्वभावाददृश्यश्च । तथापि पौनःपुन्येन दृश्यते सालम्बनध्यानशुद्धयोगिचेतसि । योगेन भग-

वन्तमन्तर्हृदये साक्षात्कृतवन्तः श्रीरङ्गे तमेव बहिर्दृष्ट्वा विस्मिता भवन्ति । यज्ज्योतिः प्रणवान्तस्थत्वेन यमिभिरन्तर्हृदयेऽनुभूयते तदेवात्र प्रणवाभिन्नरङ्गमध्ये दृश्यते । तच्च ज्योतिः 'रमासखं किमपि महः ।' 'तत्कल्याणं किमपि यमिनां योगलक्ष्यं समाधौ पूर्णं तेजः स्फुरति भवतीपादलाक्षारसाङ्कम्' इति खलु यमिनामनुभवः । 'वर्तते सावरोधः' इति खल्वन्ते वक्ष्यते । तत्पतित्वेनैव खलु भगवत्तेजस अप्रमेयत्वं भवति । ज्योतिरनुभव एवानुस्यूतं परिवर्तते आचार्यबुद्धौ । ज्योतिरिति प्रथमपादे, रत्नमिति द्वितीये, दैवतं दैवतानामिति तृतीये, दिव्यं चक्षुरिति तुरीये । यथा श्रीमद्रकुलभूषणानां श्रीसुन्दरबाहुविषये । 'चयस्त्विषाम्' इतिवत्प्रथमं ज्योतिष अनिरूपणीयत्वेन सामान्यानुभवः । क्रमाच्छ्रीरङ्गनाथशुभविग्रहत्वेन बोधनम् । माघश्लोके 'सः' इति परामृष्टप्रसिद्धतत्पदार्थतेजसा भक्तनारदतेजोनुभवः, अत्र भक्तैर्भगवत्तेजोनुभवः, उभयत्रापि द्रष्टा दृष्टतेजसोऽप्रमेयत्वम् , अद्भुतत्वं चानुभूयते । यदिदमन्तःपुरुषे ज्योतिरिति कौक्षेयकज्योतिषोऽपि स्मरणं स्यात् , अन्तःशब्दसामर्थ्यात् । अस्य स्तोत्रस्य भोजनारम्भे पठनं वैश्वानरं ज्योतिः स्मारयतीति रसिकैर्विभाव्यम् । वैश्वानरस्मरणेन प्राणाग्निहोत्रत्वसंपादनरूपमदृष्टप्रयोजनं भोक्ष्यमाणस्यान्नस्य सुलभपचनं दृष्टप्रयोजनं च सिद्ध्येताम् । यमिनामन्तरिति तद्धृदयान्तस्तज्जप्यप्रणवान्तरिति च । किमपि । उपासितुः फलकाले हार्दज्योतिःप्रकाशे

जायमानेऽद्भुतरसावेशो निरतिशयोर्जिततेजोदर्शनाक्षमता च स्यातामेव। 'आश्चर्यवत्पश्यति कश्चिदेनम्' इति स्वस्वरूपदर्शनारम्भ एव विस्मयावह इति खलु सर्वाश्चर्यमयेन भगवता प्रदर्श्यते। 'श्रवणायापि बहुभिर्यो न लभ्यः, आश्चर्यो वक्ता आश्चर्यो लब्धा' इत्यादिकठश्रुतिरिममेवाश्चर्यत्वं प्रदर्शयति भगवद्विषये। ज्योतिषां ज्योतिः खलु ब्रह्मज्योतिः। 'फलपरिणतौ विस्मयमपि' इति प्रारम्भे विस्मयरसः। 'अथत्वे पुनरद्भुतप्रणयिनीदृष्टिस्त्वया पात्यतामन्तर्दृष्टुमनन्यदृष्टमनघं त्यक्तावधिं शेवधिम्।' इत्यप्याश्चर्यरसो द्योत्यते। 'तदिदमहो तमेकमनुभूय रसातिशयात्स्वपिति मनो मदीयमत्रालिम्पति मुह्यति वा' इति च। एष एवाद्भुतरसावेशः पित्रोर्भगवद्दवतारक्षणे 'तमद्भुतं बालकम' इत्यादिना दर्शितः। इदमित्थमिति परिच्छेद्यत्वं न्यूनत्वनिश्चायकम्। अत एव नैवं नैवमिति 'नेति नेति' श्रुतिः। प्रकृतैतावत्सर्वसदृशत्वं प्रतिषिध्यते तच्छ्रुत्या। इदमित्थंत्वप्रसंख्यानपराङ्मुखं वस्तु खलु रङ्गदृश्यं भवति।

शमिनाम्, किमपि, अञ्जनं योगदृष्टेः— (१) दुर्दर्शस्य गूढमनुप्रविष्टस्य गुहाहितस्य गह्वरेष्ठस्य दर्शने किं वाञ्जनमन्तर्दृष्टिसामर्थ्यं दद्यात्तदेकं विहाय। केवलेन प्रवचनेन, केवलया मेधया, केवलेन बहुश्रुतेन न लभ्यं तद्दर्शनम्। यमेव प्रियतमं तद्वृणुते तस्यैव तत्स्वां तनुं विवृण्वीत। वरणमन्तरा न विवरणसंभव इति चारु निरूप्यते श्रुत्या। वरणाभावे कथं विवरणं साध्येत। भगवन्माया खलु महायवनिका तं तिरो-

धत्ते। तद्वशीकरणतत्प्रपदनं विना कथं तस्यास्तिरस्करिण्या अपसारणम्। तदनपसारणे कथं तद्दर्शनम्। २ प्रत्यक्षयोग्यस्यापि निधेरञ्जनं विना करणस्य न दर्शनसामर्थ्यम्। 'अदृश्यो न हि दृश्यते' इति वस्तुस्वभावादेवातीन्द्रियस्य तेजसः अघटितघटनासमर्थं लोकोत्तरमञ्जनं विना कथं दर्शनसंभवः। 'प्रजनयति समाधिं स्वात्मनैव' 'विभूषिताक्षाः। पश्यन्ति मायानिगूढमनपायमहानिधिं त्वाम्' इत्यादिना तद्दर्शने तस्यैवाञ्जनत्वमुपपाद्यते। गिरिप्रमाणं गिरिवद्धनीभूतं चाञ्जनमञ्जनाद्रौ निरवधिकदयया। ३ ज्योतिरित्युक्तम्। अञ्जनवर्णं खलु विग्रहं निभालयामहे। तिमिराकारस्य निरतिशयतेजस्त्ववर्णनं कथमभ्रान्तं भवेत्। अत्रोच्यते। अञ्जनं बिम्बमिति यदुक्तं तत्तथैव। परं त्वतीन्द्रियवस्तुदर्शनसाधनं सिद्धाञ्जनमिदम्। अप्राकृतस्य भगवद्विग्रहस्याञ्जनवर्णत्वेऽपि ज्योतिष्ट्वं नापैति। 'तस्य यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपं यथाग्न्यर्चिः' इत्यादिश्रुत्या बहुरूपत्वं वर्ण्यते नेति नेति प्रकरणे। यथा नीलतोयदाभस्यापि चक्रवर्तितनूजस्य हेमसमानवर्णाननत्वं वर्ण्यते सुन्दरे सीतया, यथा तद्विषय एव 'शोभयन्दण्डकारण्यं दीप्तेन स्वेन तेजसा' इति प्राचेतसानुभवः, तथात्रापि सर्वाश्चर्यमये भगवद्विग्रहे नायं विरोधः शङ्क्यः। 'सत्त्वानीव विरुद्धजातिजनुषा सिद्धानि सिद्धाश्रमे वैरं यत्र मिथस्त्यजन्ति विधयः सर्वे निषेधैः सह' इत्युक्तरीत्या यथा सर्वकारणे सर्वकार्यात्मके भगवति सहजविरो

धिनामविरोधेन समवायस्तथा भगवद्विग्रहेऽपि 'अणुर्बृहत्कृशः स्थूलः' इत्यादिविरोधसमाधिः। एकस्यैव भगवन्मूलरूपस्यानेकावताररूपत्वेन भासमानत्वमभ्युपगच्छन्त्यस्मत्संनिकृष्टाः श्रीमदानन्दतीर्थार्याः। ४ निरञ्जनत्वेन प्रसिद्धं ज्योतिरस्मदर्थमञ्जनं भवतीत्यघटितघटना द्योत्यते। अञ्जनविग्रहचक्षुःसंयोग एव निरञ्जनस्वरूपविषयसूक्ष्माग्र्यबुद्धिसाधकः।

**चिन्तारत्नम्।** १ ज्योतिष्ट्वमेव पुनरनुभूयते। मध्योक्ताञ्जनत्वं पूर्वोक्तज्योतिषानन्तरोक्तरत्नज्योतिषा च संदष्टं ज्योतिष्येव पर्यवस्येत्। 'चिन्तामणिमिवोद्धान्तमुत्सङ्गेऽनन्तभोगिनः' इति श्रीमद्भट्टार्याणां विचित्रोऽनुभवः स्मार्यते। अञ्जनसहायेनापि स्वल्पायामपि चिन्तानुवृत्तावसमर्थानां सकृच्चिन्तनमात्रेण काङ्क्षितानुग्राहकम्। 'स्मृतो यच्छति शोभनम्' 'स्मृते सकलकल्याणभाजनम्', 'स्मरतः पादकमलमात्मानमपि यच्छति' इत्यादिप्रमाणान्यनुसंधेयानि। 'प्रणतजनचिन्तामणिगिरिः' इति न्यासतिलके। २ ज्योतिःप्रकरणाद्योगप्रकरणाच्च रत्नशब्दश्चिन्ताशब्दश्चात्र सुश्लिष्टौ। ३ मा भूच्चिन्तानुवृत्तिः, मा भूदञ्जनाक्तेनान्तरावृत्तचक्षुषा प्रत्यग्ज्योतिर्दर्शनम्, दिदृक्षितं ज्योतिश्चिन्तामात्रेण सौलभ्याद्रत्नत्वेन भासेत, काङ्क्षितं सर्वं सद्यो दद्याच्च।

**सुलभमिह नः।** [1]अयोगिनामप्यस्माकमिह हृदयाद्बहिरिदंत्वेन निर्देश्ये पुरोदेशे दृश्यम्। यमिनामिति स्थाने नः

इति प्रतिनिर्देशः । [2]तज्ज्योतिरस्माकं सुलभम् । वयं तु तस्य सुदुर्लभा इति व्यज्यते । 'स महात्मा सुदुर्लभः' इति खलु तस्याक्रन्दनम् । 'त्रिषु लोकेषु किंचन । नानवाप्तमवाप्तव्यम्' इति उच्चैर्येनोद्घोषितं तेनैव खलु तदपवादेनेदमुच्यते । अत्रापि 'प्रणीयनि जने दूरदत्ताभिमुख्यम्' इत्याचार्याः । [3]पूर्वोदाहृतयोगभाष्योक्तं सुलभतमोपायत्वमत्र सुलभशब्देन प्रत्यभिज्ञाप्यत इव, योगप्रकरणात् । [4]'न रत्नमन्विष्यति मृग्यते हि तत्' इति न्यायमुल्लङ्घ्यान्वेष्टव्यतया श्रुत्युपदिष्टं रत्नमेवास्माननिवष्यदत्र प्राप्तम् । [5]'अन्तर्यो मृग्यते स स्थिरभक्तियोगसुलभः' इति महाकविः । स्थिरभक्तियोगं विनैवान्तर्मृग्यतेजसोऽत्र सुलभसंदृश्यत्वम् ।

**सिद्धिमोक्षानुरूपम्** । [1]'योगप्रकरणे सिद्धिशब्दस्य मुक्त्यर्वाचीनाणिमादिसिद्धिविषया प्रसिद्धिर्ग्राह्या । 'ते समाधावुपसर्गा व्युत्थाने सिद्धयः' 'जन्मौषधि मन्त्रतपः समाधिजाः सिद्धयः' इत्यादियोगसूत्रेषु तथैव प्रयोगो दृश्यते । [2]'यत्साध्यते तत्सिद्धिरिति यौगिकार्थाश्रयणेऽपि तदर्थपौष्कल्यवतीषु साध्यैकान्तासु तादृशसिद्धिष्वेव सामान्यतः पर्यवस्येत्, न सिद्धसाध्योभयाकारवन्तं मोक्षं गृह्णीयात् । [3]योगशास्त्रे सिद्धिः कैवल्यं चेति पृथगेव वर्णनं भवत्युभयोः फलयोः । [4]ज्योतिरनुभवप्रकरणे रूपपदघटितानुरूपशब्दप्रयोगः स्वनुरूपः ।

**दीनानाथव्यसनशमनम्** । १ इष्टप्राप्तिरुक्ता, आर्ताना-

मार्तिनिवृत्तिरुच्यते । २ व्यसनमिति विषयेषु सक्तता । सा च योगस्यात्यन्तपरिपन्थिनी । परमानन्दघनभगवत्संस्पर्शजन्यसुखेन विषयाशा सुलभं निवर्तेत । अशक्तानामनाथानां विषयसंगनिरासकम् । ३ तेषामेव योगासिद्धिजन्यदुःखनिवर्तकं च । दीर्घकालादरनैरन्तर्यासेवनेन बहुतरक्लेशसाध्यो योगः कथं साध्येतेति शोचतां तद्दिव्यविग्रहदर्शनेन तदालम्बनध्यानसौकर्यापादनेन क्लेशमयदुःखादिव्यसनशमनम् । ४ सर्वदुःखशमनं वा ॥

दैवतं दैवतानाम् । १ सर्वाधिकदेवतात्वाभावे न सर्वदुःखभयनिवर्तकत्वसिद्धिः । 'ब्रह्मा स्वयंभूश्चतुराननो वा' इति श्लोकेन दाशरथेरतिलङ्घितद्रुहिणशंभुशक्रत्वमुक्तम् । तस्यापि दैवतं खलु रङ्गमध्यं तेजः । यो जगदेकवीरः, यं सर्वे वीरा नेमुः, यश्च केनाप्यपराजितः, केनापि न नमितः, यश्चावतारान्तरदशायां स्वेनैव 'रामः शस्त्रभृतामहम्' इति सर्वोत्कृष्टधन्वित्वेन गीयते, सोऽपि इदं महो ननाम सह पत्न्या विशालाक्ष्या, जितस्तत्तेजोलावण्यादिभिः । ब्रह्मादीनां तदुपरिभूतरामस्यापि दैवतम् । २ किमेकं दैवतमिति युधिष्ठिरेण सामान्येन पृष्टे 'दैवतं दैवतानाम्' इति भगवद्विषयनिर्धारणस्य भीष्मोत्कृष्टमतत्वात्तस्यैव सर्वोत्कृष्टदैवतत्वम् । भीष्मवचनं प्रत्यभिज्ञाप्यत इव । वक्ष्यमाणश्वेताश्वतरस्थस्य 'दैवतानां परमं च दैवतम्' इति खण्डस्य भीष्मवचनमर्थनिर्णायकमिति भावः । 'स्मर्यमाणमनुमानं स्यादिति' इति वैश्वानराधिकरणसूत्रन्यायो

ऽत्र द्रष्टव्यः । भीष्मेण देवतं दैवतानामिति स्मर्यमाणं श्रौतवचनविवक्षितविशदीकरणं भवति । ३ योगसूत्रेषु ईश्वरशब्द एव प्रयुज्यते । योगस्य संपूर्णोपपादनं श्वेताश्वतरोपनिषद्येव श्रूयते । तदुपनिषद्वाक्यान्येव परामृश्यन्ते 'यत्रैकाग्रता तत्राविशेषात्' इति योगविषयकशारीरकसूत्रेणेति सर्वसंमतम् । तत्र च शिवो, महेश्वरो, रुद्र इत्यादीश्वरवाचकाः शब्दा एव श्रूयन्ते । 'विश्वाधिको रुद्रो महर्षिः' इत्युच्यते । 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्' इति च । एवं योगध्येयत्वमीश्वरस्यैव श्रुतियोगसूत्रसिद्धमिति प्राप्ते दैवतं दैवतानामिति श्रुतिपदे उपादीयेते । यथा 'दैवतानां परमं दैवतम्' इत्येतावन्मात्रेण न देवताविशेषनिर्णयस्तथैव तत्पूर्वखण्डेन 'तमीश्वराणां परमं महेश्वरम्' इत्यनेनापीति भावः । उभयत्रैकरूप्येणार्थवर्णने सापेक्षत्वान्न निरपेक्षसमुदायशक्तिरूपरूढिरिति भावः । /

**दिव्यं चक्षुः श्रुतिपरिषदाम् ।** १ शिवरुद्रादिशब्दा न रङ्गनाथपरत्वेन नीता इति पुनराक्षेपे— प्रत्युच्यते सर्वश्रुतीनामयमेव तात्पर्यभूमिरिति । 'मनोऽस्य दैवं चक्षुः' इति श्रुत्या 'दिव्यं चक्षुः' इति मन उच्यते । श्रुतिपरिषदां दैवतदैवतत्वेन मनोगतम् । एकदेशमात्रावलोकनापातप्रतीयमानो वेदार्थोऽन्यः, अन्यश्च कृत्स्नपरामर्शप्रतिपन्नोऽर्थ इति प्रसिद्धं खलु । शास्त्रसंशये शास्त्रविवादे च परिषद्भिरेव शास्त्रार्थनिर्णयः स्यात् । 'आम्नाय एव भगवानुपासनीयः, पौर्वापर्यपरामर्शादाम्नायो

यदृच्छया वदेत् । जगद्बीजं तदेवेष्टं चेतने च स आश्रयः', इति श्रीवाचस्पतिमिश्रा ईक्षत्यधिकरणे । श्रुतीरेव परिषद्रूपेण संकल्प्य ताः पृच्छामः । यत्र तासां मनस्तदेव वयमपि श्रद्दधीमहि । मिलितानां तासां सर्वासामिदमेव मनः । यथा सर्वश्रुतीनां विभागकर्ता शारीरकप्रणेता पाराशर्यो महति सूरिसमाजे स्वभुजमपि चोद्धरन् 'सत्यं सत्यं पुनः सत्यं, न दैवं केशवात्परम्' इति त्रिः शपथयति, तथैव तद्विभक्तास्तद्व्याख्याताः श्रुतयोऽपि परिषत्सु मिलितास्तद्वदेव भगवत्परत्वं शपथयेयुः । 'सर्ववचसामवसानसीमां तमेव सर्वकारणमुशन्त्यनपायवाचः ।' पण्डिताश्चेत्पारिषदास्ते पक्षपातिनः स्युरभिनिवेशवत्पुरुषत्वात् । मूलप्रमाणभूताः पुरुषत्वतत्प्रयुक्ताभिनिवेशरहिताः श्रुतीरेव पृच्छामः । तासामेव स्वनाथविषयनिकृष्टविशेषज्ञानसंभवः । पतिदेवतानां श्रुतीनां कथं स्वपतिविषयसंशयः । 'निःसाधारण्यनारायणपदविषये सर्वाः श्रुतयो निश्चयं यान्त्यबाधे । सर्ववेदप्रपठनमहितं पुंसूक्तं यत्परत्वैकतानं तस्यैव श्रीपतित्वं वदत्युत्तरानुवाकः ।' पुंसूक्तस्य भगवत्परत्वमभ्युपगम्यते श्रीमता कालिदासेन । पुरुषोत्तमशब्दस्य तस्मिन्नैकान्त्यं च तेन स्पष्टमुच्यते । अत एव 'पुरुषोत्तमः कः' इति । 'हरिर्यथैकः पुरुषोत्तमः स्मृतः' इति वदन्तं युष्मत्पक्षपातिनं महाकविं पृच्छेत्यर्थः । 'स्मृतः' इति गीतावचनस्मरणम् । यद्येकवारं मिलितश्रुतिपरिषन्निर्णये न प्रत्ययः, ताः पुनः पुनः मेलयित्वा पृच्छ । सहस्रकृत्वः पृष्टा अपि तास्तदेव ब्रूयुः ।

पुनः पुनरालोच्यापि न प्रथमनिर्णयविरुद्धं कदापि ब्रूयुः । परिषच्छब्देन बहुवचनेन च एते भावा व्यज्यन्त इति भाति । यदि कपिञ्जलाधिकरणन्यायेन बहुवचनस्य त्रित्वपरिश्रान्तिस्तिस्र एव परिषदः । ता अपि त्रिः शपथयेयुर्न दैवं केशवात्परम्' इति तद्विभक्तृवत् । २ यदुक्तं योगसूत्रेषु ईश्वरनाम्न एव ग्रहणमिति, तदपि नास्मत्पक्षविरुद्धम् । योगसूत्रव्याख्यातारः सर्वेऽपि 'यथाभिमतध्यानाद्वा' इति सूत्रव्याख्याने शिवं विष्णुं वा ध्यायेदिति वदन्ति, नेश्वरध्यानं निर्बध्नन्ति । 'यदेवाभिमतं हरिहरमूर्त्यादि तदेव ध्यायेत्' इति शेखरकर्तारो नागेशभट्टाः । उदाहरन्ति च ते साङ्ख्ययोगसंप्रदायपूर्वाचार्यवचनं 'उक्तं च पञ्चशिखाचार्यैरादिविद्वान्स्वयंभूर्भगवान्विष्णुर्योगबलेन स्वनिर्मितं चित्तं प्रविश्य कपिलाख्यपरमर्षिर्भूत्वा कारुण्याज्जिज्ञासमानायासुरये साङ्ख्यसूत्राख्यं तन्त्रं प्रोवाचेति' इति । पञ्चशिखश्च तत्संप्रदायप्राचीनाचार्य इति सुप्रसिद्धम् । य ईश्वरः प्रोच्यते योगसूत्रे 'पूर्वेषामपि गुरुः कालानवच्छेदात्' इति स एवादिगुरुरिति स्पष्टमुच्यते । स च भगवान्विष्णुरिति कण्ठरवेणोच्यते पञ्चशिखाचार्यैः । तस्माद्योगसंप्रदायरीत्या स एवेश्वरशब्दाभिप्रेतः । स्वयंभूरित्युक्ते हिरण्यगर्भप्रतीतिः स्यादिति तद्व्यवच्छेदार्थं भगवान्विष्णुरित्युच्यते । ३ श्रुतयः परिषदि संघीभूताः पृष्टाः प्रतिब्रुवन्ति 'जनानां चक्षुरिति प्रसिद्धा वयं लोके वेदे च । अस्माकं तु भगवानेव चक्षुः । तं विना वयमक्षिहीना अन्धा एव । प्रमातृचक्षुर्भूता-

नामस्माकमेव यद्यान्ध्यं भवेदन्धेन नीयमाना अन्धा इव प्रमातारो विपद्येरन्निति। श्रुतयोऽमुमेव दिव्यं चक्षुरित्याद्रियन्ते। ४ प्रमाणान्तराप्राप्तालौकिकातीन्द्रियविषय एव वयं श्रुतिं प्रमाणीकुर्मः। तथा च श्रुतिरस्माकमलौकिकं दिव्यं चक्षुः। भगवांस्तु अस्मद्दिव्यचक्षुर्भूतानां श्रुतीनां दिव्यं चक्षुः। चक्षुषश्चक्षुः खलु भगवान्। ५ श्रवणं मननं निदिध्यासनमिति प्रसिद्धं साधनत्रिकमध्यात्मशास्त्रे। तैश्च ब्रह्मापरोक्ष्यं साध्यं स्यात्। श्रुतिर्नाम श्रवणम्। श्रुतिमतिध्यानानि श्रुतिपरिषच्छब्देन गृह्यन्ते। श्रुत्यादित्रयाणामित्यर्थः। तेषां दिव्यचाक्षुषत्वरूपफलपरिणतिभूतमित्यर्थः। यच्छ्रुत्यन्तेषु श्रुतम्, यच्छ्रीभाष्ये मतम्, यद्धृदम्बुजे ध्यातम्, तदेव श्रीरङ्गधामनि चक्षुर्विषयं दृष्टं भवति। चक्षुरिति चाक्षुषम्। 'श्रुत्यन्तरेषु श्रुतं भाष्ये मतं ध्यातं हृदम्बुजे। लक्ष्मीधरं प्रपद्येऽहं दृष्टं श्रीरङ्गधामनि॥' इति श्लोकानुसारेणात्र वर्णनं क्रियत इति रसिकसंमतं स्यात्। ६ श्रुतिपरिषदां सकलश्रावणज्ञानानाम्। ब्रह्मविषयसकलश्रावणज्ञानानां श्रीरङ्गनाथोऽपरोक्षताभूमिः। अपरोक्षावगतिपर्यन्तं ज्ञानमेव मुमुक्षुभिरीप्स्यते। 'चक्षुर्वै सत्यम्' इति श्रुतिश्चाक्षुषज्ञानस्य विशदतमत्वं संशयरहितत्वं सुनिश्चितार्थत्वं ज्ञानकाष्ठात्वं च बोधयति। यद्यपि चक्षुःशब्दे लक्षणाश्रयणम्, फलमुखं गौरवं नात्यन्तं दोषायेति लक्षणा सह्या। दिव्यं चक्षुरिति तन्मात्रादिसूक्ष्मप्राकृततत्त्वसाक्षात्करणसमर्थस्य योगसंपाद्यस्य लोकातीतचक्षुषः पारिभाषिकं नाम

योगशास्त्रे । योगप्रकरणात्तस्यैव ग्रहणं स्यात् । तद्व्यवच्छेदार्थं श्रुतिपरिषदामित्युच्यते । न योगप्रसिद्धदिव्यचक्षुः, किन्त्वौपनिषददिव्यचक्षुः ।

दृश्यते । १ आन्तरं प्रत्यग्ज्योतिर्बहिर्दृश्यते निरतिशयदयया । 'य एषोन्तरक्षिणि पुरुषो दृश्यते' इत्यादाविव न योगिप्रसिद्धया दृश्यत इत्युक्तिः । किं तु योग्ययोगिसाधारण्येन सर्वदृश्यम् । प्रत्यक् प्रत्यक्षयितुं समर्था भगवद्दया वा तत्प्रवाहभूतशठरिपुभणितिर्वा । वकुलामोदवासितस्य तस्य सारस्वतस्रोतसस्तत्सामर्थ्यमस्तीति 'प्रत्यक्प्रत्यक्षयेन्नः' इति तद्विषयश्लोके आचार्यैरुच्यते । 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इति श्रुतिः । अधीरैर्दीनानाथैरस्माभिरपि तद्दृश्यते । सूक्ष्मामग्र्यां बुद्धिं विना असूक्ष्मदर्शिभिरस्माभिर्दृश्यते । २ भावनाफलं तु दर्शनम् । सा च भावनानन्तरश्लोकमारभ्य खलु प्रवर्तयिष्यते । 'उदेति पूर्वं कुसुमं ततः फलं...तव प्रसादस्य पुरस्तु संपदः' इति न्यायेनोपायप्रारिप्साक्षण एव फलसंकीर्तनम्, चिन्तारत्नत्वान्निदिध्यासितस्य । ३ दर्शनरूपफलकामनायाः काम्यरूपोपायाधिकारान्तर्भूतत्वात्फलस्य पूर्वमेव संकीर्तनम् ॥

रङ्गमध्ये । १ नास्य रङ्गदर्शनस्य द्रविणव्ययाद्यपेक्षा । सर्वदृश्यहरिश्चन्द्रनाटकवीथीरङ्गवदिदमकिंचनसुलभं रङ्गम् । २ रङ्गमध्येऽवश्यं ज्योतिरपेक्ष्येत । रङ्गमध्ये किमपि ज्योतिर्दृश्यते । ३ प्रणवमध्ये । 'तस्योंकारः स्मृतो नाम तेनाहूतः

प्रसीदति ' इति प्रमाणेनोंकारेणाह्वाने क्षेपीयसी दर्शनसिद्धिः । न प्रणवसमानं भगवत्तोषकरं स्तोत्रम् । प्रकर्षेण नूयतेऽनेनेति प्रणवः । ४ रङ्गस्य प्रणवस्य वाच्यापेक्षा, रङ्गिणो विमानरूपनिवासापेक्षा वाचकापेक्षा च । तथाचोभयोः परस्परापेक्षा । नित्यश्च वाच्यवाचकयोः संबन्ध इति नित्यवासः सिध्यति । ५ 'रंगशालायां मायायवनिकान्तस्थं ज्योतिस्तिरस्कारिणीमपसार्य बहिर्नृत्तरङ्गे दृश्यते ।' अत्र पूर्वार्धे शेषिप्रतिपादनम्, उत्तरार्धे शेषप्रतिपादनमित्यस्ति काचिद्विचित्रा व्याख्यानभङ्गी या श्रीमद्दीक्षितैः प्रदर्शितेति कदाचिद्वयमश्रौष्म । तेषामभिप्राय एवं स्यादित्युन्नीयते, दीनानाथ इति बृहन्मूषिकः यो गृहेषु प्रतिनिशं भूखननेन गृहिणां पीडामापादयति । मूषिकादय ईतिबाधासु परिगणिताः । दीनानाथकृतं दीनानाथरूपं वा व्यसनं तत्सहजशत्रुभिः सर्पैः शाम्यति । चक्षुःश्रुतिरिति प्रसिद्धं सर्पनाम । चक्षुःश्रुतिपरिषदां दिव्यं सर्पाणां मध्ये दिव्यसर्पः । ' अनन्तश्चास्मि नागानाम् ' इति गीता । ' तस्मै देवा बलिमावहन्ति ' इति तस्य देवतानां दैवतत्वम् । दीनानाथरूपव्यसननिरासकं देववृन्दप्रहितबलि देवतदैवतभूतं दिव्यसर्पभूतशेषज्योतिरपि दृश्यते । शेते भुजङ्गशयने स महाभुजङ्गः । एकादशश्लोके ' भुजगशयन ' इत्युच्यते । यदि शेषावतारः पतञ्जलिः योगप्रकरणे योगप्रवर्तकमहायोगिभूतशेषस्य प्रथमश्लोके विशिष्य वर्णनमत्यन्तमुचितं स्यात् । श्रीरङ्गे परस्य ब्रह्मणः शेषित्वं स्फुटमीक्ष्यते शेषोपरिशयानत्वाद्भगवतः । उभयोः शेषशे-

षिणोर्दर्शनं विना कथं शेषित्वस्य स्फुटमीक्षणम् ।

वेलातीतश्रुतिपरिमलं वेधसां मौलिसेव्यं
प्रादुर्भूतं कनकसरितः सैकते हंसजुष्टे ।
लक्ष्मीभूम्योः करसरसिजैर्लालितं रङ्गभर्तुः
पादाम्भोजं प्रतिफलति मे भावनादीर्घिकायाम् ॥

योगसोपानमारभ्यते । शुभवासना संचेतव्या । अनादिकालसंचितदुर्वासना दूरतो निरसनीयाः । वासनारेणुभिरेव भगवद्योगोपरोधः । स्वर्गादिवासना अपि दुर्वासनात्वेन 'स्वर्वासदुर्वासना' इत्यादिना आचार्यैर्गण्यन्ते । अनादिकालसंचिता भूयस्यो निबिडा दुर्वासनाः निरतिशयपरिमलवद्वस्तुसंयोगरूपयोगेनैव निरसितुं शक्याः । निरतिशयसुगन्धिभगवत्पादाम्भोजं विना किं वा तादृशदुर्गन्धं क्षेप्तुं प्रभवेत् । घनीभूतदुर्वासनादूषिते मनसि तदेव संयग्योजयितव्यम् । तद्योगं विना न दुर्वासना विलयमीयुः । ता अदृष्टरूपाः धर्माधर्मत्वात् । अतिनिबिडापूर्वरूपो दुर्गन्धो यक्षानुरूपो बलिरिति न्यायेन प्रबलतमेनापूर्वेणैव गन्धेनापोह्येत । भगवद्दिव्यमङ्गलविग्रहस्य सर्वगन्ध इत्यपूर्वः कश्चिद्गन्धः प्रतिपाद्यतेऽपूर्वार्थबोधिन्या श्रुत्या । सर्वगन्ध इति सुगन्धा गृह्यन्ते । सर्वे सुगन्धास्तत्रान्तर्भवन्ति । सर्वे सुगन्धास्तस्य मात्रामुपजीवन्ति । नित्यश्च स गन्धः । यो गन्धो नित्यः सर्वश्च, स एवानादिसंचितं दुर्गन्धं जेतुं शक्नु-

यात् । अनिरस्तासु दुर्वासनासु कथं मनसः स्वच्छता, कथं च भगवत्पादाम्भोजस्य तत्र प्रतिफलनम् ।

वेलातीतश्रुतिपरिमलम् । १ वेलातीतं निरतिशयं यत्सर्वगन्धत्वेन श्रुतिबोध्यमपूर्वं परिमलं तद्विशिष्टं योगारोहप्रथमपर्वभूतं भगवत्पादाम्भोजम् । अयमर्थ आचार्यैरेव प्रदर्शितो यादवाभ्युदये 'अभ्यासङ्गं जलधिशयनादुत्थिते शार्ङ्गपाणौ पत्युः पुण्यं प्रथमनयनस्पन्दनं प्राप्नुकामा । नित्यापूर्वश्रुतिपरिमलं न्यस्तलीलारविन्दा पादाम्भोजं सह वसुधया धारयामास धन्या ॥' इति श्लोके । भूयश्च माहात्म्यमुभयोः श्लोकयोः । २ वेलातीतश्रुतिः श्रीशठकोपमुनिदृष्टा त्रैवर्णिकत्वमर्यादामतीता सर्ववर्णार्हा । सैव संस्कृतश्रुतितोऽपि भगवत्पादाम्भोजमहिमानमैदम्पर्येण प्रकाशयति । आद्यगाथायामेव तत्प्रणामः स्वमानसं प्रति विधीयते गाथिना । तत्र च भगवान्विशेषणतयैव वर्ण्यते, तदुज्ज्वलचरणं च विशेष्यत्वेन । यद्यपि त्रिभिः पादैर्भगवद्वर्णनं क्रियते, विधेयप्रणत्यन्वयिपादाम्भोजोपसर्जनतयैव तत्क्रियत इति स्पष्टमेव । त्रैवर्णिकमात्राधिकारता विवेद्याः प्रसिद्धा मर्यादा वेलाशब्देन गृह्यते । तामतिक्रान्ता आम्नायानां प्रकृतिरपरा शठजिद्दृष्टसर्वीयशाखा । संस्कृतवेदमर्यादाभूतत्रैवर्णिकत्वनियममतिक्रान्तो द्राविडवेदसागरः । शठजिन्मुनेः सारस्वतस्रोतसो वकुलामोदवासितत्वं प्रसिद्धम् । वेलातीतश्रुतिर्द्रामिडीब्रह्मसंहिता । तस्याः परिमलं वकुलसुमनोवासना । द्राविडश्रुतेर्भगवत्पादाम्भोजनिरन्तरसक्तत्वात्पादाम्भोजे तत्सौरभसं-

क्रान्तिः। द्राविडभाषाचागस्त्यप्रणीता 'विष्वगाचान्तसिन्धोः कुम्भीसूनोरसुरकबलग्रासिनी स्वैरभाषा' इति वर्ण्यते। तद्भाषासंहिताग्रन्थः सिन्धुभूतमपि दुर्गन्धं सुलभं चुलकयेत्। दुर्वासना अपोह्य शठस्यास्मच्चित्तस्य विजये श्रीशठारेरेव प्रभुता स्यात्। 'यथार्था शठजित्संज्ञा मच्चित्तविजयाद्ययोः' इत्याचार्याः। चित्तविजय एव योगनिर्वर्त्यः। ३ आमोदितोऽपि निगमैर्विभुरङ्घ्रियुग्मे, इत्यन्यत्रापि भगवच्चरणयोर्निगमवासितत्वं वर्ण्यते। उत्कृष्टवाचि सौरभ्यास्तित्वं भूयः प्रदर्श्यते आचार्यैरन्यैश्च कविभिरिति प्रसिद्धम्। 'सायं संफुल्लमल्लिकापरिमलमुचा वाचा' इत्याचार्यैः स्ववाचो वर्णनं स्वात्यन्तसुहृद्भूतश्रीमद्विद्यारण्यमुनिसकाशप्रेषितप्रतिपत्रिकायाम्। लोकोत्तराया वेदवाचः स्वतः सौरभं स्यादेव। सर्वगन्धभगवन्निश्वसितरूपत्वाच्च तस्यां तदसाधारणसर्वगन्धसंक्रमो नियतः। स च श्रुतिसंक्रान्तो गन्धस्तत्स्तूयमानपादाम्भोजेन संबध्येत। ४ 'भारूपः सर्वगन्ध एष म आत्मान्तर्हृदये' इति शाण्डिल्यविद्याश्रुतिः प्रथमश्लोक एव प्रत्यभिज्ञापितेत्युक्तम्। तत्र च भारूपसहपठितः सर्वगन्ध इति ज्योतीरूपत्वं प्रथमश्लोकेनोपपाद्य तदनन्तरपठितसर्वगन्धत्वगुणप्रदर्शनमनन्तरश्लोकोपक्रमे संगतामिति सहृदयैर्भाव्यम्। यस्य श्रुतिपरिमलस्य सर्वसुगन्धान्तर्भावयितृत्वं तस्य वेलातीतत्ववर्णनं स्वारसिकमेव। 'वेलातीतश्रुतिपरिमलैर्व्यक्तिमभ्येति काल्ये विन्यासैस्ते विबुधपरिषन्मौलिविन्यासदृश्यैः' इति पादुकाश्लोकोऽत्र भाव्यः।

वेदात्मनो गरुडस्य भगवत्पादाम्भोजसंमर्दात्तदीयवासनासंक्रान्तिसंभवः प्रादर्शि यादवाभ्युदये 'श्रुतिरूपेण वाहेन शेषकङ्कणशोभिना । स्वाङ्घ्रिसौरभदिग्धेन दत्तसंग्रामदोहलम् ॥' इति । ५ दृश्यत इति पूर्वश्लोकान्ते 'द्रष्टव्यः' इति श्रुतिखण्डः प्रत्यभिज्ञापितः । तदनन्तरं 'श्रोतव्यः' इति खलु श्रुत्यक्षराणि । द्रष्टव्यश्चेच्छ्रोतव्य एव । दृश्यत इत्युक्त्वानुपदमेव श्रुतिशब्दग्रहणाच्छ्रवणं द्योत्यत इव । ६ अतीन्द्रियदिव्यगन्धानुभवे नास्मत्प्राकृतश्रोत्रस्य सामर्थ्यं स्यात् । प्राकृतगन्धग्रहण एव घ्राणग्राह्यत्वनियमः । इन्द्रियसामान्यात्यन्तागोचरदिव्यगन्धग्रहणविषये कुत्रेन्द्रियव्यवस्थावकाशः । भगवदनुग्रहलब्धदिव्यज्ञानेन खलु तदापरोक्ष्यं संभवेत् । दिव्यज्ञानवतः श्रोत्रस्य दिव्यगन्धानुभवो वाननुभवो वा घ्राणेन समान एव । मनागपि तेषां न सामर्थ्यवैषम्यमुभयोरप्यविषये गन्धे । उपचरितमेव स्याद्घ्राणेन दिव्यगन्धग्रहणवर्णनम् । अलौकिकस्य श्रुत्येकसमधिगम्यस्य सर्वविलक्षणगन्धस्य श्रुतीन्द्रियग्राह्यत्ववर्णनमुपचरितमेव स्यान्नासंगतम् । उभयोरसामर्थ्ये तुल्ये किमर्थं श्रुत्यनुभाव्यं परिमलविशिष्टमित्युच्यत इति चेत्—प्रथमातिक्रमे मानाभावादिति न्यायादिति ब्रूमः । श्रुतीन्द्रियमेव खलु प्रथममपूर्वगन्धबोधिनीं श्रुतिं गृह्णाति । कर्णविवरैः खलु सोऽपूर्वगन्धोऽस्मान्प्रविशति । प्रथमद्वारं खलु श्रोत्रं तद्गन्धप्रवेशे । प्रविशन्नेव स गन्धः वेलातीतमुद्वेलं श्रुतिं (श्रोत्रम्) वासयति । 'स्रग्धरा दुग्धराशिः श्रवणरसनया

सेव्यः' इत्याचार्यैरुच्यते खलु । उद्वेलं श्रोत्रेणाप्यनुभाव्यं परिमलं भगवत्पादाम्भोजस्येति भावः । ७ 'वकुलधरतनुस्त्वं संहितां यामपश्यः श्रुतिपरिषदि तस्याः सौरभं योजयन्ति' इत्याचार्याः पादुकासहस्रे श्रुत्युपबृम्हणरूपत्वात्तया निबिडसंगवत्याश्रय्यास्ततः सौरभ्यग्रहणमिति प्रदर्शयन्ति । स्वतो वा भगवन्निश्वासगन्धसंक्रान्त्या वा वकुलसौरभसंक्रान्त्या वा श्रुतेरुद्वेलं परिमलं स्यादेवेत्याचार्याणामाशयः । ८ अत्र वेलातीतापूर्वपरिमलेन योगोपक्रमः । 'स्थिरपरिमलैः, 'वहते वासनां मौलिबन्धे' इति योगोपसंहारः । हेयवासनानिरसनदक्षशुभवासनासंपादनमेव योगकार्यम् । अतः परिमलेनोपक्रम्य तेनैवोपसंह्रियते । इदं च रसिकमनोरञ्जकं स्यात् । ९ 'एतेन योगः प्रत्युक्तः' इति शारीरकप्रत्युक्तस्य वेदान्ताननुमतस्य योगसंप्रदायस्य श्रीरङ्गनाथविषययोगवर्णने तद्दत्तवेदान्ताचार्यसंज्ञैराचार्यैरादरणं न न्याय्यं स्यात् । संज्ञादातृविषय एव वेदान्तविरुद्धाचरणं कथं संज्ञादात्रा मृष्येत । कथं च तादृशयोगाराधितो भगवान्प्रीतः एनं प्रीणीयात् । १० श्रीरङ्गभर्त्रा दत्तां वेदान्ताचार्यसंज्ञामन्वर्थयामि' इत्याचार्योक्तमपि मृषा भवेत् । एवं प्राप्ते— वेदान्तविरोधशङ्कानिवृत्त्यर्थं योगे आरभ्यमाणे आचार्यैः श्रुतिवासितोऽयं योगो न श्रुतिविरुद्ध इति व्यक्तुमादावेव श्रुतिपरिमलसंकीर्तनमिव ; तस्य परिमलस्योद्वेलत्वसंकीर्तनमपि । ११ दूराद्गन्धग्रहणम् । अनन्तरं क[illegible]रित्सैकतम् , तत्र हंसाश्च, अनन्तरं लालयितृमातृकरस्पर्शि[illegible]नि च क्रमेण दृग्गोचरी-

भवन्ति । अनन्तरमम्भोजप्रतिफलनम् ॥

**वेधसां मौलिसेव्यम्** । १. श्रुतिपरिमलोत्कर्षं परमपुरुषाद्गृहीतवेदसंप्रदायचतुर्मुखव्यक्तो वा जानीयात् । स एव तत्र निरतिशयरसिकः । चतुर्भिरपि मुखैः सदा चतुरोऽपि वेदानधीयानस्तद्वासनामनुभवन्नेवास्ते । निरतिशयसुरभिनाभीकमलसमुत्पन्नस्य पद्मयोनेः पद्मे सहजैव रुचिः । पद्मे रासिकयम्, परिमले च रासिकयम । स्वापरिचितवकुलसुमनोवासितत्वान्नवत्वमपि स्यात्पादाम्भोजगन्धस्य । २. स्वेन सर्वदाधीयमानाः श्रुतयोऽनिशं भगवत्पादाम्भोजं शिरसा धारयन्ति । कथं तत्संप्रदायप्रवर्तकस्तदनुष्ठानविपरीतमाचरेत् । यथा श्रुतयः, सोऽपि स्वयं मूर्ध्नि धारयति । प्रथमं श्रुतिशिरोधार्यत्वव्यञ्जकश्रुतिपरिमलवत्ववर्णनम्, अनन्तरं श्रुतिप्रवर्तकहिरण्यगर्भशिरःसेव्यत्ववर्णनं चैतद्व्यञ्जयतीव । श्रुतिः खल्वनुष्ठापिका ब्रह्मणोऽपि । ३. यद्यपि कदाचिद्धिरण्यगर्भेण 'प्रतिफलनकल्पं भगवदैश्वर्यगुणविग्रहादि' इति तत्प्रवर्तितयोगदर्शने उपदिष्टं स्यात्, न तावता तस्यावैदिकत्वं भाव्यम् । तस्योपदेशो यो वा को वा भवतु योगशास्त्रे । तस्यानुष्ठानं तु भगवत्पादाम्भोजस्य मौलिसेवनमेव । किमुपदेशं श्रद्दध्याम, अनुष्ठानं वा । अनुष्ठानमेव प्रबलं प्रमाणम् । यदि भगवत्पादाम्भोजस्य प्रतिबिम्बकल्पत्वं हार्दम्, कथं तेन स्वशिरो भूषयेत् । प्रतिबिम्बत्वस्य स्वाभिप्रायत्वे खपुष्पकृतशेखर इत्युप-

हास्यः स्यात् । पादाम्भोजं शिरसा सेवमानो विग्रहगुणानां गन्धादीनामपि सत्यत्वमस्मान् दृढं ग्राहयति । विग्रहगुणगन्धादीनामेव सत्यत्वाभ्युपगमे कः संशयः स्यादैश्वर्यज्ञानबलादीनां सत्यत्वे । 'प्रजल्पन्त्यैश्वर्यं प्रतिफलनकल्पं भगवतः' इति योगदर्शनानुवादः संकल्पसूर्योदये । यद्यपि कदाचित्किश्चिदपराद्धं स्यादनुपदमेव क्षालयेत्तदपराधं मूर्ध्नि भगवत्पादाम्भोजमारोप्य । यथा वत्सापहारानन्तरं मोहात्यये त्रिः परिक्रम्य भगवत्पादयोरभिष्टौति भूमानम् 'नौमीड्यतेऽभ्रवपुषे तटिदम्बराय' इत्यारभ्य । तत्रापि दिव्यमङ्गलविग्रहानुभवरसमेव ख्यापयति । सगुणमूर्त्यनुभवं च श्लाघते 'श्रेयः स्रुतिम्' इति । विगर्हते च केवलनैर्गुण्यनिष्ठां स्थूलतुषावघातौपम्यवर्णनेन । 'मृदुपदे पशुपाङ्गजाय' इति खलु प्रथमश्लोक एव तस्य भगवत्पादसौकुमार्यानुभवः । 'पांसुलपादस्य हालिकस्य' इतिवत्प्रसिद्धकठिनपाङ्किलपादपशुपाङ्गसंभवत्वेऽपि सहजं सरोजसौकुमार्यमीषदपि नापैतीति विस्मितो भवति । ४. वेधाः खलु श्रीरङ्गनाथस्य प्रथमाराधकश्चिराराधकश्च । 'सर्गानिव बहून्कमण्डलुगलद्गङ्गाप्लुतोऽपूजयद्ब्रह्मा त्वाम्' इति खलु श्रीभट्टपादाः । सत्यलोकाच्छ्रीरङ्गमागत्य चिरानुभूतमम्भोजं शिरसि निवेशयेदेव ॥

प्रादुर्भूतम् । १. न कृत्रिमं ब्रह्मसृष्टमम्भोजमिदम् । तथा चेत्— नात्यन्तादरबहुमानादि स्यात् । वेधसोऽज इत्यौ-

पचारिकं रूढं नाम। इदं तु मुख्यमजं स्वयं व्यक्तम्। ३. 'देवकीपूर्वसंध्यायां प्रादुर्भूतं महात्मना' इति भगवदवतारवदस्य प्रादुर्भाव इति व्यज्यते। तत्र यथात्ममाययैव प्रादुर्भावस्तथास्यापि। स्वेच्छया वा स्वात्मत्वेन स्वमतस्य ज्ञानिन इच्छया वा भगवत्प्रादुर्भावः। 'संभवाम्यात्ममायया' इति गीतावचनस्थात्मशब्दो भगवन्तं वा 'ज्ञानीत्वात्मैव मे मतम्' इति तच्छास्त्रोक्तप्रसिद्धया भगवदभिमत्या स्वात्मभूतज्ञानिनं वा गृह्णीयात्। ये ये ज्ञानिनो यथा यथा रोचयेयुस्तथा तथात्मानं सृजेदिति प्रसिद्धमेव ॥

**कनकसरितः सैकते।** १. अन्तर्ज्योतिरिति 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, आप्रणखात्सर्व एव सुवर्णः' इति छन्दोगश्रुतिरपि प्रत्यभिज्ञापिता। आदित्यमण्डलान्तर्वर्तिपुरुषस्य हृदयगुहान्तर्वर्त्यानन्दमयस्य चैक्यं प्रसिद्धम्। अन्तर्ज्योतिषो हिरण्मयपुरुषस्य कनकसरिन्मध्यस्थत्वमेव शोभनम्। यादृशः पुरुषस्तादृशी सरित्। यथा श्रीनटराजस्य हाटकसभा, तथा श्रीरङ्गनटस्य हेमापगा प्रादुर्भावस्थानम्। सह्यजासिकतास्वतिसूक्ष्माः कनकांशा दृश्यन्त इति प्रसिद्धम्। अत एव सैकतस्य विशेष्यत्वेन ग्रहणम्। श्रीमच्छङ्कराचार्यैः प्रणखादारभ्य भगवद्विग्रहवर्णनं कृतम्। २. कनकसरित्कनकसिकतासु प्रादुर्भूताम्भोजस्य हेमत्वमपि संभावनार्हमेव। 'कार्यं निदानाद्धि गुणानधीते' इति न्यायमुदाहृत्य नैष-

धीयहंसस्य हेमत्वमुपपादितं कविना श्रीहर्षेण। तथा च हेमाम्भोजं सुरभि इत्यनुभवः । आप्रणखात्सर्व एव सुवर्ण इति चोपपादितं भवति। रमणीयत्वं सौगन्ध्यमित्युभयमप्यपेक्षितमेव । 'कटकरुचिभिः' 'न्यञ्चत्काञ्चीकिरणरुचिरम्' 'कनकतिलकालंकृतम्' 'रत्नापीडद्युतिशबलिते किरीटे' इत्यनुस्यूतः कनकानुभवः । ३. कनकसरिन्मध्यपुलिने भगवान् शेते। अहो! भाग्यं सह्यजायाः। 'मन्मध्यगतः कृष्णः' इति दृप्तगोपिका वदन्ति। सर्वदा भगवानस्या मध्ये शेते। 'मध्ये कवेरदुहितुर्मुदितान्तरात्मा' इति खलु कावेरीमध्यस्थत्वविशिष्टो योग्यनुभवः । यथा तस्या मध्ये शेते तथा मदात्मान्तरपि शयीतेति मनोरथः । एतदेव महाभाग्यमृषिणा प्रशस्यते 'कावेरी च महाभागा' इति । ४. 'सत्याल्लोकात्परममहितात्स्थानतो वा रघूणां मन्ये मातः समधिकगुणं सैकतं सह्यजायाः। पूर्वं पूर्वं चिरपरिचितं पादुके यत्त्यजन्त्या नीतो नाथस्तदिदमितरन्नीयते न त्वयासौ ॥' इति निवृत्तिकथोज्झितभगवन्निरतिशयप्रीतिवर्णनं कनकसरित्सैकतविषये ॥

**हंसजुष्टे**। १. हंसैः प्रीतिसेविते। परमहंसा आचार्याः। विशेषतः 'पत्युः संयमिनां प्रणम्य चरणौ तत्पादकोटीरयोः संबन्धेन समिध्यमानविभवान्धन्यांस्तथान्यान्गुरून्।' इति मध्यमणिभूतस्य यतिपतेर्ग्रहणम्। 'अत्रैव श्रीरङ्गे सुखमास्व' इति श्रीरङ्गनाथेनादिष्टो यतिपतिरिति प्रसिद्धम्। २. वेधस आग-

नस्योक्तत्वात्तद्वाहभूतहंससाहचर्यमप्यत्रास्तीति द्योत्यते। ३. सर्वपुरुषकारपौष्कल्यमुच्यते, दीनानाथानामस्माकं तद्बलेनैव फलसिद्धिसंभवात्। प्रथमं हंसाः। अनन्तरं जगन्मातरः। ४. आचार्यसंनिधावारब्धो योगः प्रशस्तः स्यात्। तत्कटाक्षसुधाप्लवेन योगः सुसाधः। ५. 'योगप्रथमाङ्गभूतयमा अत्र व्यज्यन्ते। 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इति योगसूत्रम्। हंसानां योगिनां संनिधौ हिंस्राणामपि हिंसारुचिर्नोदियात्। 'तत्संनिधौ वैरत्यागः' इति योगसूत्रम्। 'सिंहैः सार्धं विहरति गणः सैन्धुरः शान्तवैरः' इत्याचार्या अगस्त्याश्रमवर्णने। 'सत्यं वद' इति खलु प्रथममनुशासनमाचार्यस्य। सत्यास्तेयादिव्रतस्खलने स एव शासिता। ब्रह्मचर्यं गुरुकुले सुलभमेव। त्यक्तसर्वपरिग्रहाणां संनिधावपरिग्रहाभ्यासः सुकरः। बाह्याभ्यन्तरशौचतपःस्वाध्यायरूपा नियमा अपि गुरुसंनिधौ सुलभाः॥

**लक्ष्मीभूम्योः करसरसिजैर्लालितम्।** १. आस्तां नाम भगवाननुजिघृक्षारहितः। त एव मातरौ करुणारूपिण्यौ वात्सल्यनिर्भरे करसरसिजैर्भगवत्पादाम्भोजं गृहीत्वा लालयित्वा कुलिशकठिनेऽस्मन्मनसि निवेशयितुम्। 'कथङ्कारं लक्ष्मीकरकमलयोग्यं निजपदं निदध्याद्रङ्गेशः कुलिशकठिनेऽस्मिन्मनसि नः। न चेदेवं मध्ये विशति दयया देवि भवती निजाक्रान्तिक्षुण्णस्मरशरशिखाकण्टकततिः॥' इति पादुकाश्लोकोऽत्रानुसं-

धेयः । तत्र पादुकया पुरुषकारः, मानसे निवेशनम् , न वयं पादाम्भोजस्य मनसि साक्षान्निवेशनमभिलषामः, किं तु तत्र प्रतिफलनार्थं तदुपरिदेशे आनाय्य क्षणकालं स्थापनमेव । ध्रुवमेव तत्क्रियेत मातृभ्याम् । यथा पादुकाश्लोके ‘एवम्’ इति पादुकाविशिष्टपादानुभवोऽनुसंधीयते, तथात्रापि लालयितृमातृकरसरसिजविशिष्टपादाम्भोजप्रतिफलनम् । यथा पादुकाया मध्यपातित्वं तथात्रापि मातृकरपद्मानां मध्यपातित्वं प्रतिबिम्बे । २. पद्मानि संघश एव दृश्यन्त इत्यनुभवसिद्धम् । भगवत्पादस्याम्भोजस्वरूपणेऽवश्यं बहुपद्मसाहचर्यं वर्णनीयम् । भगवत्पादाम्भोजाभ्यां सह चत्वारि पद्मानि वर्ण्यन्तेऽम्भोजरूपकसामञ्जस्याय । अजपद्मस्याजान्येव पद्मानि सहचारीणि स्युः । ३. पद्मयोनयो वेधसः, पद्मप्रिया हंसाः, पद्मवनालया पद्मा, देव्योः करसरसिजानि, हृदयपुण्डरीकम् , इत्येतत्सर्वं पद्मरूपके चारु संगतम् । ४. श्रीमच्छङ्कराचार्या भक्तिपरीवाहभूते हरिपादादिकेशान्तस्तोत्रे ‘आक्रामद्भ्यां त्रिलोकीमसुरसुरपती तत्क्षणादेव नीतौ याभ्यां वैरोचनीन्द्रौ युगपदपि विपत्संपदोरेकधाम । ताभ्यां ताम्रोदराभ्यां मुहुरहमजितस्याञ्चिताभ्यामुभाभ्यां प्राज्यैश्वर्यप्रदाभ्यां प्रणतिमुपगतः पादपङ्करुहाभ्याम् ॥’ इति भगवत्पादपङ्करुहेऽन्वभूवन् । तत्र ‘अञ्चिताभ्यामुभाभ्याम्’ इत्यस्य श्रीभूमिभ्यां लालनेन पूजिताभ्यामिति कविहृदयवर्णनं स्वारसिकम् । सामानाधिकरण्यावलम्बनेन द्वाभ्यामित्यर्थो वर्ण्यते कविहृदयावेदिभिः । जङ्घाद्वयवर्णने ‘करपरि-

मलनानन्दहृष्टे रमायाः, जङ्के नारायणीये' इत्युक्तं तैः । स्तोत्रारम्भ एव लक्ष्मीः स्तुता— 'कुन्देन्दुस्वच्छमन्दस्मितमधुरमुखाम्भोरुहां सुन्दराङ्गीं वन्दे वन्द्यामशेषैरपि मुरभिदुरोमन्दिरामिन्दिरां ताम् ।' इति । भूमिश्च स्तुता 'धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्वशक्तिं विधात्रीं विष्णोर्विश्वात्मनस्तां विपुलगुणमयीं प्राणनाथां प्रणौमि ॥' इति ॥

**रङ्गभर्तुः ।** यद्यप्ययं नटाग्रेसरः, अस्य ताम्रोदरौ पादावम्भोजवत्सुकुमारावेव, न काठिन्यवन्तौ ॥

**प्रतिफलति मे भावनादीर्घिकायाम् ।** १. योगारुरुक्षोरारम्भदशायां बिम्बस्याधोभागस्य पादस्य स्पर्श एव चिरप्रयत्नसाध्यः स्यात् । यदि संयोगः संपाद्येत, न स्पर्शादधिकः स्यात् । अत एवैतच्छ्लोकवृत्तस्य संग्रहानुवादे 'पादाम्भोजं स्पृशति' इत्युच्यते । स च स्पर्शो न साक्षात्स्पर्शोऽपि । किंतु बिम्बप्रतिबिम्बभावरूपसंबन्धमात्रम् । २. यद्यपि 'भगवान्' 'रूपं रूपं प्रतिरूपो बभूव' इति प्रतिवस्तु जलसूर्यकादिवदन्तरवस्थितो भवतीति श्रूयते, मद्भाग्यविपर्ययादेतत्क्षणपर्यन्तं भगवतः प्रतिवस्तुप्रतिबिम्बितत्वरूपव्याप्तिनियमो मदेकवर्जं एवाभूत्, इदानीमेवोक्तपुरुषकारमहिम्ना मन्मानसे प्रतिफलनम् । संचितदुर्वासनानिःशेषक्षालनेन स्वच्छे चेतस्येव प्रतिफलनं संभवेत् । तदर्थमेव भूयस्यः सुवासना मिळिताः श्लोके । भगवन्निश्वसितरूपवेदगन्धः, वकुलकुसुमगन्धः, नि-

त्यापूर्वसर्वगन्धः, अनेकपद्मयोनिमौलिगन्धः, श्रीभूमिकरसरसिजयोः ‘गन्धद्वाराम्’ इति प्रसिद्धो गन्धः, भगवत्पादाम्भोजगन्ध इत्यनुभूयमाना गन्धपरम्परा अवधेया। परिमलरङ्ग इत्याबालगोपालं प्रसिद्धे श्रीरङ्गनाथे आपादचूडं लोकोत्तरपरिमलपरम्परावर्णनं सुसंगतमिति सहृदयैर्भाव्यम्। एतेन ‘बहुरपि लघुः प्रत्यक्चिन्ताबहिर्विषयाटवीविहृतिचटुलं चेतो रोद्धुं कथं प्रभविष्यति। अनिभृतनटक्रीडोत्कण्ठाविजृम्भितसंभ्रमे कलभचरणे लूतातन्तुः कथं निगलायते॥’ इति श्लोकोद्भाविता शङ्का शान्ता भवति। ४. प्रतिफलति चित्तादर्शे। दर्पणप्रतिबिम्बितभगवद्विग्रहानुभवो भक्तचित्तरञ्जक इति प्रसिद्धमेव। आलयेषु दर्पणप्रतिफलनं विचित्रतया सर्वजनैरनुभूयते। बिम्बतोऽपि प्रतिबिम्बस्य चारुता। योगारम्भे प्रतिफलनेनारुरुक्षुचेतस आवर्जनं व्यज्यते। ५. प्रतिफलनं च श्लोकोक्तसर्वविशिष्टं स्यात्। यथा शकुन्तलाबिम्बस्य चित्रार्पणे दुष्यन्तस्य विशिष्टलेखनमनोरथः ‘कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः। शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्॥’ इति दृश्यते। अत्रापि सैकतम्, सरित्, हंसाः, योगगुरुः, जगन्मातृकरसरसिजानि, तल्लालितनटपादाम्भोजं चेति वैचित्र्यपरम्परा मनसि लिखितेव भवति। ६. प्रतिफलनपदं च योगप्रकरणे सुसंगतम्, तच्छास्त्रे बहुलं प्रयोगात्। उपाधौ प्रतिबिम्बनं च बिम्बाकारो

बुद्धेः परिणाम इति योगसंप्रदायः । ७. 'स्वान्तसङ्क्रान्तबिम्बच्छायापत्त्यापि नित्यं सुखयति यमिनो यत्तदव्यान्महो नः ॥' इति श्रीमच्छङ्कराचार्याः । तच्चैतस्यात्यन्तसन्निकृष्टमिति स्पष्टमेव । रङ्गमहस उज्ज्वलचरणस्यैवात्र प्रतिफलनम् । ८. दीर्घिकापदम् 'दीर्घकालादरनैरन्तर्यसत्कारासेवितो दृढभूमिः' इति योगसूत्रप्रत्यभिज्ञापकम् । मम भावनायाः सरित इव नाविच्छिन्नप्रवाहत्वमस्ति । दीर्घिकारूपवापीमात्रत्वं संपादितं भावनायाः । ९. श्रीमल्लोकदेशिकरर्चाया हृदसादृश्यं वर्णितम्' अत्रार्चाहार्दयोरैक्यान्महद्वर्णनानुसारेण दीर्घिकात्वं निरूप्यत इव भावनायाः । १०. निषद्वरदीर्घिकातौल्येनान्यत्र वर्णितं मम मनः शुभभावनादीर्घिका भवति । ११. प्रतिफलनक्रियाकार्यप्रतिबिम्बस्यासत्यत्वमौत्सर्गिकम् । तत्त्वदर्शनफले योगेऽसत्यफलवर्णनमनुचितम् । अत्र त्रेधा समाधिः । प्रतिफलनं नाम बिम्बरूपपरिणाम एव । स च सत्यः । यद्यपि मुख्यमेव प्रतिफलनमिष्येत, 'विवृणुते तनूं स्वाम्' इति भगवदनुग्रहैकलब्धभगवद्विग्रहप्रतिबिम्बस्य नासत्यत्वशङ्का । 'मायोदन्वत्यपारे प्रतिफलति मृषावीचिषु ब्रह्मचन्द्रश्छायांशास्तस्य जीवाः' इति वर्णितरीत्यान्तःकरणेषु प्रतिफलितबिम्बभूतब्रह्मणः प्रतिबिम्बाश्चिदाभासा जीवाः प्रतिबिम्बसामान्यन्यायेनासत्या अचेतनाः स्युरित्याक्षिप्ते 'अचिद्वस्तुप्रतिबिम्बानामेवासत्यत्वाचेतनत्वनियमो न चित्प्रतिबिम्बानाम्, चित्प्रतिबिम्बाश्चित एव स्युः' इति प्रतिवदन्ति । यदि नीरूपस्य चितः प्रतिबिम्बः संभवेत्तत्प्रति-

बिम्बस्यासत्यत्वमचेतनत्वं च न कुत्रापि दृष्टचरम् । श्रुतिस्मृतयो जलसूर्यकादिदृष्टान्तैर्जीवानां प्रतिबिम्बत्वं वर्णयन्ति । तेषां च दृष्टं सत्यत्वं चेतनत्वं च नाचित्प्रतिबिम्बासत्यत्वाचेतनत्वनियमेनापन्होतुं शक्यमिति तेषामाशयः स्यात् । वस्तुतस्तु— प्रतिबिम्बग्रहणमपि स्वच्छद्रव्यप्रतिहतेन नयनमहसा बिम्बग्रहणमेव । सर्वथा भगवत्प्रदर्शितभगवत्पादाम्भोजप्रतिफलनस्य नासत्यत्वम् ॥

चित्राकारां कटकरुचिभिश्चारुवृत्तानुपूर्वां
काले दूत्यद्रुततरगतिं कान्तिलीलाकलाचीम् ।
जानुच्छायाद्विगुणसुभगां रङ्गभर्तुर्मदात्मा
जङ्घां दृष्ट्वा जननपदवीजाङ्घिकत्वं जहाति ॥ ३ ॥

अनन्तरं जङ्घारोहः । प्रथमं पादप्रतिफलनवर्णनेन मनसस्तन्मयतापत्तिः । 'कटकरुचिभिः' इति पादजङ्घासन्धिस्थितकटककान्तिभिः पादस्य भूषितत्वं व्यज्यते । पादानुभवकाल एव तद्भूषणभूतकटकरुच्यनुभवः स्यात् । कटकरुचयश्च जङ्घामपि चित्रं भूषयन्ति । कटकरुचिदर्शने तद्भूषितजङ्घादर्शनं स्यादेव । अतो न पादमात्रे विश्रान्तिः । पादाम्भोजादुपरि जङ्घां प्रत्याकर्षन्ति मानसं विचित्राः कटककान्तयः ।

**चित्राकारां कटकरुचिभिः** । पादजङ्घे उभयत्र प्रसृत्कटककान्त्या सुसंगतत्वप्रदर्शनमुपरि संचाररुचिजननार्थम् ।

कटकरुचयो जङ्घारुचिं जनयन्ति । चित्रशब्देनाद्भुतरसनिमग्नत्वं व्यज्यते । कटकश्च रत्नखचितः सौवर्णः स्यात् ।

**चारुवृत्तानुपूर्वाम्** । 'वृत्तानुपूर्वे च नचातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये । शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ॥' इति कुमारसंभवे श्रीपार्वतीजङ्घावर्णने । 'श्रीमत्यौ चारुवृत्तौ' इति श्रीमच्छङ्कराचार्या भगवज्जङ्घानुभवे । तदुभयं संकलय्य 'चारुवृत्तानुपूर्वाम्' इत्यत्रानुभवः । न केवलमनुपूर्ववर्तुलत्वं सौन्दर्यम्, किं तु भक्तमनोरञ्जनदूत्यदुकूलहरणदैत्यानुधावनादिसुन्दराचरणरूपवृत्तमपि सौन्दर्यावहमिति चारुवृत्तशब्देन व्यज्यते । न केवलं रूपसौन्दर्यम्, वृत्तसौन्दर्यमपीत्याशयः । एतदेव द्वितीयपादे स्पष्टं विव्रियते । व्यञ्जितस्य मध्यमकाव्यत्वापादकस्पष्टप्रतिपादनं जङ्घासुभंगवृत्तान्तेष्वादरातिशयेन । एष एव क्रमः श्रीशंकराचार्याणां श्लोकेऽपि दृश्यते । तत्रापि 'चारुवृत्ते' इति प्रथममुक्त्वानन्तरं 'सूरीन्द्रैः स्तूयमाने सुरकुलसुखदे सूदितारातिसङ्घे जङ्घे नारायणीये' इति जङ्घासंबन्धीन्यद्भुतानि वर्णितानि ॥

**काले दूत्यद्भुततरगतिम्** । अत्यद्भुतः पाण्डुतनयदूत्यवृत्तान्तो न वर्णितः श्रीशंकराचार्यैः । वर्णितस्तत्रस्मदीयैः श्रीभट्टार्यैः 'दूत्यप्रसङ्गोत्सुकम्' इति पादवर्णने । गतिव्यापारस्य पादजङ्घसाधारणत्वादत्र जङ्घाविषये तद्वर्णनम्, द्रुतधावनादेर्जाङ्घिको जङ्घाल इति जङ्घाप्रयुक्तत्ववर्णनरूपलोकव्यवहारोप्यनु-

सृतो भवति। शेते रङ्गशायीति न मन्तव्यम्। यदि पाण्डव-समानभक्तास्तत्प्राणभूताः, यदि च तादृशोऽवसरः, शयनादुत्थाय धावेदेवेति 'काले' शब्देन व्यज्यते। रङ्गनटस्य जङ्घा लोकोत्तरैव स्यात्। तस्य महानटस्य जाङ्घिकत्वे द्रुततरगतौ वा कः संशयः। यद्यपि पाण्डवदौत्ये नाधिको जङ्घाव्यापारः, न तरां द्रुतगतेर्वा द्रुततरगतेर्वा संभवः, द्रुततरगतित्ववर्णनम् 'दूत्यप्रसङ्गोत्सुकम्' इत्युक्तोत्कटौत्सुक्यरूपमनोरथसंरम्भेण वा, दूत्योपलक्षितदुकूलहरणदैत्यानुधावनादिविधौ साक्षाद्वृत्तत्वेन वा निर्वाह्यम्।

**कान्तिलीलाकलाचीम्**। उदाहृतकुमारसंभवश्लोके स्रष्टा ब्रह्मा कृत्स्नामपि स्वबुद्धिसंचितां लावण्यसामग्रीं जङ्घायां विनिवेश्य संचितलावण्यस्य निःशेषमुपयुक्तत्वाच्छेषाङ्गनिर्माणार्थं लावण्यान्वेषणे सप्रयत्नोऽभूदित्युक्तम्। तत्र स्रष्टृरूपप्रजापतिव्यापारत्वात्तथा प्रयत्नकर्तव्यता। अत्रानन्यसृष्टं भगवद्विग्रहं स्वयं व्यक्तम्। तस्मान्नावयवान्तरसौन्दर्यसंपादनप्रयत्नावश्यकता। यदि सृष्टिः, न प्रथमशिल्पिचतुर्मुखसृष्टिः। किं त्वखण्डब्रह्माण्डप्रथमतरशिल्पिना पद्मजानिना स्वयमिच्छामात्रसिद्धा स्वात्मनः सृष्टिः। 'इच्छामात्रं प्रभोः सृष्टिः' इति न तत्र प्रयत्नदशावकाशोऽपि। इच्छामात्रेणाभीष्टे साधिते किमर्थमनन्तरदशाभूतप्रयत्नाश्रयणम्। यद्यपीयं जङ्घा लोकोत्तरा लावण्यपूर्णा च, एतदुपर्यवयवानां न मात्रयापि लावण्यन्यू-

नता । ऊर्वादीनामूर्ध्वावयवानां पूर्णं प्रतिक्षणं वर्धमानं लावण्यं बिन्दुरूपेण वा ओघरूपेण वा अधः पतदेवास्ते । अतिशयितला-वण्यवद्वस्तुविषये लावण्यं बिन्दुरूपेण स्यन्दत इति लोकव्य-वहारः । उपर्यवयवेभ्यो निष्यन्दमानलावण्यस्य ग्रहणार्थं नि-र्मितपतद्ग्रहत्वेनोत्प्रेक्ष्यते जङ्घा । लीलाकलाचीमित्यत्र लीला-शब्देन नेयं कलाच्युपभोगेन रजोधूसरा भवति । सदा जङ्घा-लत्वेन रजः संबद्धापि निर्लेपस्वभावत्वादलंकारार्थं सुरक्षि-तकलाचीवन्निर्मलैवास्ते । क्रीडाकलाच्यलंकारार्था मलापनय-नेन मुहुर्मुहुः संस्क्रियेत ॥

**जानुच्छायाद्विगुणसुभगाम्** । अत्रावयवद्वन्द्वसन्धिभूत-जानुसौन्दर्यवर्णनं हृद्यम् । द्रुततरगतिजङ्घाभावनेन तद्धावना-नुधावनेन परिश्रान्तमेव स्यान्मानसम् । जङ्घाभावयितृ मनस्तां धावन्तीमनुधावेदेव । इतरथा भावनाविच्छेदः स्यात् । श्रान्तं च मनश्छायां विश्रमं चापेक्षेत । छायाकाङ्क्षायां जानुच्छायेति कान्त्यर्थकच्छायाशब्दप्रयोगः । अस्त्येव भूयो विश्रमसंभव ऊरुद्वन्द्वे ॥

**रङ्गभर्तुः** । लोकातिशायिनी जङ्घा, रङ्गभर्तृजङ्घात्वात् ॥

**मदात्मा** । अत्र मनःप्रकरणे आत्मनोऽपि वाचकात्मशब्दः प्रयुज्यते, जननपदवीजाङ्घिकत्वहानरूपमुक्तेर्मुख्यतोऽन्वयाय । मनसो बन्धमोक्षयोः कारणत्वेऽपि, आत्मन एव तत्फलभा-क्त्वम् ।

जङ्घां दृष्ट्वा जननपदवीजाङ्घिकत्वं जहाति । १. दृष्ट्वा इत्यस्य भजनं कृत्वा इत्यर्थः । 'भजते रङ्गनाथस्य जङ्घाम्' इत्यनुवादात् । निदिध्यासनप्रकरणान्मध्य एव मुख्यदर्शनवर्णनमनुचितं स्यात् । दर्शनसमानाकारोपासने दर्शनस्योपचारिकः प्रयोगः । निदिध्यासने वैशद्यरूपाविशेषसमर्पकत्वं द्रष्टव्यशब्दस्य 'द्रष्टव्यः' इत्यादिविधिवाक्ये । 'सारथ्यपारिषद्सेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामैः । स्निग्धेषु पाण्डुषु जगत्प्रणतस्य विष्णोर्भक्तिं चकार नृपतिश्चरणारविन्दे ॥' इति दूत्याद्यद्भुतचरित्रानुसंधानेन भक्त्युत्पत्तिर्भागवतानां सहजैव । जङ्घानुभवे भक्त्युपचयो द्योत्यते । भक्त्युपक्रम एवोत्तरपूर्वाघयोरश्लेषविनाशरूपामृतत्वस्य संभवः । अत एव जननपदवीयातायातविरतिरूपामृतत्वफलस्यात्र संकीर्तनम् । 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुतिर्दृष्ट्वाशब्देन प्रत्यभिज्ञाप्यते । दर्शनाव्यवहितोत्तरं फलं यथा 'सेतुं दृष्ट्वा' इत्यत्र जङ्घाभावनादुपासकजङ्घानिवृत्तिरिति चारु प्रदर्श्यते । भगवज्जनिचेष्टितयोर्दिव्यत्वज्ञानेनैतदेहावसानेऽस्मज्जनेरात्यन्तिकनिवृत्तिरिति भगवदुक्तानुसारेण दिव्यजङ्घास्वरूपचेष्टिताद्यनुभवेन संसारपदवीजाङ्घिकत्वनिवृत्तिः स्यादेव । मात्रा दाम्ना बद्धस्वभावनेन निःशेषकर्मबन्धविच्छेदः, पूतनास्तनन्धयत्वज्ञानेन पुनः स्तनन्धयत्वाभवनमिति च वैचित्र्यप्रदर्शनशैल्याचार्याणां श्रीमच्छङ्कराचार्याणां च । उभयोरपि मार्गदर्शी महर्षिः शुकः । २. शौचसंतोषतपःस्वाध्यायेश्वरप्राणिधानानि नियमाः ।

'दृष्ट्वा' इति भजनग्रहणेनेश्वरप्रणिधानरूपनियमो द्योत्यते। चित्राकारां कटकरुचिभिरिति संतोषः, चारुवृत्तेति बाह्याभ्यन्तरे शौचे च संगृह्यन्ते। ३. न जाङ्घिकत्वहानस्य सार्वभौमत्वम्। जननपदवीसंसरणविषय एव तद्धानम्। 'सर्वान्लोकान्कामान्नी कामरूप्यनुसंचरन्' इत्युक्तभगवदनुसंचरणानुधावनादिकं जाङ्घिकत्वं महत्तरमेव स्यात्। शुभान्यूर्ध्वाङ्गानि द्रुततरमारोहेदेव। ४. वासनारेणुगुण्ठितत्वाज्जगदटवीमहाजाङ्घिकत्वम्। भगवज्जङ्घाभजनसंपादितशुभवासनाभिस्तान्वासनारेणूनपोह्यानेकजन्मसाहस्रीरूपसंसारपदवीव्रज्याया निवर्तनम्॥

कामारामस्थिरकदलिकास्तम्भसंभावनीयं
क्षौमाश्लिष्टं किमपि कमलाभूमिनीलोपधानम्।
न्यञ्चत्काञ्चीकिरणरुचिरं निर्विशत्यूरुयुग्मं
लावण्यौघद्वयमिव मतिर्मामिका रङ्गयूनः॥ ४॥

'आकर्षन्द्विजराजमपि' इत्यादिवक्रक्षरक्षणसंरम्भेण द्रुततरगतिना भगवता सहानुधावनेन श्रान्ता मनीषा विश्रान्त्यर्थिनी स्यात्। भूयसी विश्रमसामग्री प्रदर्श्यतेऽत्र॥

कामारामस्थिरकदलिकास्तम्भसंभावनीयम्। १. मन्मथोद्यानं प्रदर्शयिष्यते। तत्रात्यद्भुतं नाभीसरश्च। इदानीं कामोद्यानद्वारस्थ कदलिकास्तम्भत्वेन भगवदूर्वोरुत्प्रेक्षणम्। श्री-

मच्छङ्कराचार्याः भगवद्वक्षःस्थलमुपवनत्वेन वर्णयन्ति 'वक्षः श्रीवृक्षकान्तं मधुकरनिकरश्यामलं शार्ङ्गपाणेः संसाराध्वश्रमार्तैरुपवनमिव यत्सेवितं तत्प्रपद्ये ।' इति । ऊरुद्वन्द्वं मन्मथोद्यानस्य द्वारभूतमित्याचार्यानुभवः । यद्यपि 'वृत्तावन्योन्यतुल्यौ चतुरमुपचयं बिभ्रतावभ्रनीलावूरू चारू हरेस्तौ मुदमतिशयिनीं मानसे मे विधाताम् ।' इति श्रीमच्छाङ्करीयवर्णनरीत्यास्मद्वर्णनरीत्या चाद्भुतसौन्दर्यवदूरुयुग्मम् , तथापि ततोऽप्यतिशयितत्वादुपर्यनुभविष्यमाणसौन्दर्यस्य द्वार एवास्मद्दे कामोद्यानस्येत्याचार्या व्यञ्जयन्ति । २. मदननगरतोरणस्तम्भविभ्रममिव बिभ्राणा जङ्घाद्वितयमिति भट्टबाणाः सरस्वतीवर्णने । नगररूपणादप्युपवनत्वरूपणं सुन्दरमित्याचार्याः, श्रीशंकराचार्याश्चाभिप्रयन्तीव । ३. 'तं देशमारोपितपुष्पचापे रतिद्वितीये मदने प्रपन्ने । काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥' इति रतिवसन्तसहचरितमन्मथप्रवेशे ईश्वराश्रमस्थचेतनद्वन्द्वानां परस्परभावसमुदयवर्णनारम्भः कुमारसंभवे । अत्र मन्मथमन्मथस्योरुद्वन्द्वमुद्यानद्वारं भवति । तत्र द्वन्द्वानां परस्परं भावाः । अत्रोरुद्वन्द्वविषयेऽचेतनक्षौमस्य भावः नायिकानां भावश्च । यथा तत्रात्राप्युद्दीपनसामग्रीपौष्कल्यमालम्बनविभावपूर्तिश्च प्रदर्श्येते । ४. 'एकान्तशैत्यात्कदलीविशेषा जातास्तदूर्वोरुपमानबाह्याः' इति कदलीनामुपमानकक्ष्याया दूरोत्सारणं कालिदासेनैकान्तशैत्यहेतोः । एकान्तशैत्यमत्रोत्कटमपेक्ष्यते तापत्रयगाढतप्तैः संसाराध्वपरिश्रा-

न्तैः । 'एष ब्रह्म प्रविष्टोऽस्मि ग्रीष्मे शीतमिव ह्रदम्' इति खलु ब्रह्मावगाहे शैत्यानुभवः । यत्कदलीनां हेयत्वे कारणमुक्तं तदेवात्र तदुपादाने कारणं भवति । शीतलमुद्यानद्वारं कदलिकास्तम्भाभ्याम् । ५. अत्रासनरूपं योगतृतीयाङ्गं स्थिरशब्देन व्यज्यते । 'स्थिरसुखमासनम्' इति खलु योगसूत्रम् । तत्प्रत्यभिज्ञाप्यते स्थिरशब्देन । 'प्रावेपत वरारोहा प्रवाते कदली यथा' इति कदलीनां प्रसिद्धं कम्पवत्त्वम् । चलत्वं योगासनविरुद्धम् । देवीनां चेदं द्वन्द्वं स्वापहेतूपधानम् । भूयः कम्पमाने उपधाने तासां कथं स्वापसंभवः । अतः कदलिकायाः स्थिरत्वं कल्पयित्वा तदुत्प्रेक्षणं क्रियते । ६. संयग्भावनीयमित्यर्थकस्य संभावनीयशब्दस्यास्मिन्भावनाप्रकरणे सुश्लिष्टता रसिकैः संयगनुभाव्या । भावनीयमिदं युग्मम्, सम्यक् च भावनीयम् । ७. आत्मारामाणामेतदात्मनीनमारामम् ।

**क्षौमाश्लिष्टम्** । १. कुमारसंभवश्लोके चेतनानां द्वन्द्वानां परस्परभावस्य क्रियया विवरणम् । अत्राचेतनस्य क्षौमस्योरुविषयकभावस्तदाश्लेषक्रिया च । पल्वलानां सारसामप्युपतापः प्रदर्शितो ऋषिणा रामविरहे । २. सौकुमार्यातिरेकाद्दृढाश्लेषस्यारुन्तुदत्वभयात्स्पर्शमात्र आश्लेषः । आङ् ईषदर्थे । ३. नायकनायिकानामुत्तमत्वाद्देवीभिः सह शयानस्याप्यूर्वोर्न मनागप्यनावृतता । ४. सावरणमेवोपधानं स्याल्लक्ष्मीव्रतीनां स्त्रीणाम्, किमुत लक्ष्मीनाम् ।

किमपि । स्थिरकदलिकास्तम्भत्वेन विशिष्योत्प्रेक्षणमेव साहसम् । महाकविरीतिमनुसृत्य सर्वोपमानबाह्यत्ववर्णनमेवोचितं स्यात् । अनिर्देश्यतैकस्वरूपस्योरुद्वन्द्वस्य निर्देश्यत्वापादिका विशेषोत्प्रेक्षैवानुचिता । किमपीत्यनिर्देश्यत्ववर्णनमेव वरम् । यथा ‘ नमस्तस्मै कस्मैचन ’ इति ‘ तस्मै ’ इति सर्वसमानाधिकरणं वस्तु सर्वनामशब्दतत्पदार्थत्वेन निर्दिश्यानुपदमेव ‘ कस्मैचन ’ इत्यनिर्देश्यत्वस्य कथनम् ।

कमलाभूमिनीलोपधानम् । १. तिस्रोऽपि देव्य ऊरुयुग्मे सहैव शेरते । ‘स्वापहेतुरनुपाश्रितोन्यया रामबाहुरुपधानमेष ते ’ इति प्रसिद्धं खलु भगवदङ्गस्य देव्युपधानत्वम् । २. विभक्तव्यं युग्मम् । विभक्त्रयस्तिस्रः । सर्वाः सुखं स्वपन्ति । अत्यद्भुतमिदं सापत्नम् । कमलाभूमिनीलानां तिसृणां देवीनां किमप्यद्भुतमुपधानम् । ३. पादाम्भोजे लक्ष्मीभूम्योः साधारणे । ऊरुद्वन्द्वं तिसृणां साधारणम् । केशपाशमाल्यसमर्पणं नीलाया असाधारणम् ॥

न्यञ्चत्काञ्चीकिरणरुचिरम् । अधःप्रसरत्काञ्चीमयूखा ऊर्वनुभवकाल एव काञ्चीस्थानं प्रदर्शयन्ति । काञ्चीकान्तिरज्जुभिरूर्ध्वमाकृष्यते मनः । गौर्याः काञ्चीगुणस्थानस्य निरतिशयशोभावत्त्वेनानुमेयत्वं वर्णितं हेतूपन्यासपूर्वकं महाकविना । तन्न रोचयन्ते विमर्शकाः । आचार्यैरूरुयुग्मे पततां

काञ्चीकिरणानामेव निर्देशः कृतः, न काञ्चीस्थानं वर्णितम्, नापि काञ्ची मुख्यत्वेनेति रसिकैर्विभाव्यम्। श्रीमच्छङ्कराचार्यैर्यद्यपि जघनं वर्णितं तत्पीताम्बरावृतमेवानुभूतं यथा श्रीसुन्दरबाहोः कटिज्योतिः श्रीवकुलभूषणैः। 'पीतेन द्योतते यच्चतुरपरिहितेनाम्बरेणात्युदारम्' इति श्रीशंकराचार्याः। पृथक्त्वेन मुख्यत्वेन च वर्णिता काञ्ची तः 'काञ्ची सा काञ्चनाभा मणिवरकिरणैरुल्लसद्भिः प्रदीप्ता।' इति ॥

निर्विशत्यूरुयुग्मम्। निर्वेशशब्दः पूर्णानुभवद्योतकः। पूर्णानुभवविषय एव तत्पदप्रयोग आचार्याणाम्। यथा 'निर्विष्टं यतिसार्वभौमवचसामावृत्तिभिर्यौवनम्' इति सारस्वतदुग्धसागरसुधाविषये। यथा च 'शुभसविधगिरिस्थानतो निर्विवेश' इति श्रीसुन्दरबाहुवासस्थानभूतवृषाचलयात्रामनोरथविषयगाथादशकसंग्राहकश्लोके। 'मुदमतिशयिनीं मानसे नो विधाताम्' इति च श्रीमच्छङ्कराचार्याणामनुभवपूर्णिमावर्णनमूरुविषये। 'ऊरुद्वन्द्वे विलगति शनैः' इति चोर्वनुभवोऽनूद्यते आचार्यैः। श्रान्तस्य शनैः शनैर्लावण्यामृतं निपीय निपीय पूर्णा विश्रान्तिर्भवेत्। ऊर्ध्वप्रदेशगमनयोग्यता च संपद्येत ॥

लावण्यौघद्वयमिव। १. रम्यावर्तवतो नाभीसरसः प्रसरन्ती लावण्यनिम्नगा द्वेधा विभक्तौघद्वयरूपेण प्रवहतीव भाति। २. प्रतिक्षणं नवा नवा भवत्यक्ष्णोः। क्षणे क्षणे नवतोपगमनमेव रमणीयताया रूपम्। नदीप्रवाहस्य प्रतिक्षणं

नवनवत्वं प्रसिद्धम् । ३. कान्तिप्रवाहमेव पश्यामः । न वस्तु किंचिदपीदन्तया । ४. एकावयवशोभायाः सौन्दर्यशब्देन निर्देष्टुमुचितत्वे लावण्यशब्दग्रहणमुपर्यवयवेभ्यः प्रवहत्समुदायशोभौवयोरेवोरुत्वान्नानुपपन्नम् । ५. उपर्यवयवेषु प्रतिक्षणोपचीयमानलावण्यपरीवाहा अधः पतन्त एवासते । निम्नायां गम्भीरायां नाभौ पतन्तस्तत्राप्यमान्तस्तदधः प्रदेशे पतन्ति निर्झरद्वयरूपेण । त एवोरू इत्युत्प्रेक्ष्यते । अविच्छिन्नत्वाल्लावण्यप्रवाहस्य कदाचिदपि न प्रवाहोपरत्या ऊर्वोरुपरतिशङ्का कार्या ॥

मतिर्मामिका रङ्गयूनः । सापत्न्यप्रयुक्तविरोधगन्धरहितानेकनायिकावत्त्वम्, तासां स्वेन सहशयनम्, तच्छयनार्थं स्वस्यैवोपधानीकरणमित्यादिदक्षिणनायकदत्तव्यापारा रसिकस्य यून एव संभवेयुर्न वृद्धस्य जडस्य विषयव्यावृत्तकौतूहलस्य । 'पुराणो मुनिः' 'वेदाभ्यासजडः' 'विषयव्यावृत्तकौतूहलः' इत्याद्या बह्वी गर्हा प्रोक्ता विक्रमेण नारायणमुनिविषये विक्रमोर्वशीये । तदूर्वोः स्त्रीरत्नकारणत्वनिरासार्थमेव तस्य वृद्धत्वेनारासिकत्वेन च गर्हा । तदूरुवर्णनप्रकरण एव तस्य युवत्वं जोघुष्यते आचार्यैरिति रसिकमनोरञ्जनमेव । रङ्गयून इत्यस्मिन्नेक एव श्लोके युवत्वसंकीर्तनं कृतम् । युगपदनेकपत्नीनां तुल्यभोगप्रदत्वम्, क्षौमस्याचेतनस्यापि स्वविषयकरातिभावजनकत्वम्, प्रतिक्षणं नवं नवं प्रवहल्लावण्यौघत्वम्, इत्यादिभि-

र्युवत्वं सम्यक्ख्याप्यते विक्रमपूर्वपक्षस्य महाकविपूर्वपक्षस्य वा निरासेन । यद्यप्यन्येषां मतिर्नारायणोरू गर्हेत मदीया मती रम्यजामातृरङ्गयून ऊरुयुग्मं निर्विशत्येवेति 'मतिर्मामिका' इत्यनेन व्यज्यते । अत्र स्थिरसुखासिका भवतीति योगाङ्गभूतासनसमाधिः ॥

संप्रीणाति प्रतिकलमसौ मानसं मे सुजाता
गम्भीरत्वात्क्वचन समये गूढनिक्षिप्तविश्वा ।
नालीकेन स्फुरितरजसा वेधसो निर्मिमाणा
रम्यावर्तद्युतिसहचरी रङ्गनाथस्य नाभिः ॥ ५ ॥

नाभीप्रदेशं प्रत्यूर्ध्वं गच्छति मनः । ऊर्ध्वप्रदेशारोहे उच्छ्वासनिश्वासयोर्दीर्घत्वविच्छिन्नत्वकुम्भितत्वाद्यवस्थासंभवः सहजः । अनेन प्राणायामरूपरेचकपूरककुम्भकाद्यवस्थाः सूच्यन्ते ॥

संप्रीणाति प्रतिकलमसौ मानसं मे । १. कामोद्याने गम्भीरं कान्त्यम्भःपूरपूर्णं रम्यावर्तद्युतिमन्नाभीसरः । बहूनि सन्त्याश्चर्याण्यदृष्टपूर्वाणि क्षणे क्षणे विस्मयमादधानानि । २. असौ भगवान्भाव्यमानः प्रतिकलं प्रत्यवयवं मे मानसं निरतिशयं प्रीणातीत्यपि मध्यागमने चारु द्योत्यते । ३. ऊरुद्वन्द्वविषयचिरसुखासिकारूपविलगनेन प्रीतो भगवान् 'तमेनं प्रीतः प्रीणाति' इति श्रुत्यनुसारेण नाभीप्रदेशाद्भुतप्रदर्शनेन प्रतिक्षणं

हर्षमादधाति ।

सुजाता । यद्यप्यजसंज्ञितानन्ता वेधसोऽस्यावयवभूतेन नाळीकेनोत्पाद्यन्ते, इयं स्वयंजन्मवतीति चारु विरोधः स्फोर्यते ॥

**गम्भीरत्वात्क्वचन समये गूढनिक्षिप्तविश्वा ।** 'नालीकाक्षस्य नाभीसरसि वसतु नश्चित्तहंसश्चिराय ।' इति नाभीसरोवर्णनम् , 'गम्भीराकारनाभीचतुरतरमहावर्तशोभिन्युदारे' इत्युदरवर्णनं च कृतं श्रीमच्छङ्कराचार्यैः । कविद्वयानुभवोऽत्यन्तं सुसदृश इति भाति । क्वचन समयेति प्रलयापत्संकटस्य निर्देशानर्हत्वम् । 'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयाम्' इतिवत् । निर्हेतुकसहजकृपयान्योन्यसंघर्षरूपपीडां विनैव सर्वमपि पृथक्पृथगेव न्यस्य रक्षति । यद्यपि विश्वं कृत्स्नं न्यस्तं तदल्पमिव गूढं भवति गम्भीरे नाभौ । ईदृशं विश्वनिगरणानुगुणपरिमाणवदेकैकावयवं वस्तु निरतिशयसूक्ष्मायां कलेबरान्तर्हृदयगुहायां गूढं निहितं वर्तत इत्यतोऽपि परं किमाश्चर्यम् । ईदृशबृहद्विग्रहविशिष्टेनैवानेन रङ्गशायिना मम हृदयेऽन्तर्वर्तिष्यते । यद्यपि व्यष्टिसृष्टिरूपव्यापारो वेधसः सृष्ट्वा तद्द्वारा कारयिष्यते, प्रलयापदि विश्वस्य स्वस्मिन्निक्षिप्य रक्षणस्य अन्यैरशक्यत्वात्साक्षात्स्वयमेव तत्करणम् । यस्यां विश्वमभिसंविशति, तयैव सृष्टिरपि कार्यते स्रष्टृसृष्ट्या । १. दामोदरीयोदरवर्णने 'गम्भीराकारनाभीचतुरतरमहावर्तशो-

भिन्युदारे ' इति श्रीशंकराचार्याः । गाम्भीर्यं विश्वगूढनिक्षेपेण सम्यगुपपादितं भवतीत्याचार्याणामाशयः । तैरनुभूतं चतुरतरमहावर्तशोभित्वं चानुभूयते आचार्यैः रम्यावर्तद्युतिसहचरीति । ३. गम्भीरत्वान्नाभेरावर्तवत्त्वाच्च तस्याः परित एव गमनमिति ' ऊर्ध्वमभ्येति नाभिम् ' इत्यनुवादः ॥

**नालीकेन स्फुरितरजसा वेधसो निर्मिमाणा ।** १. यद्यपि शुद्धसत्त्वमये भगवन्मूर्तौ न रजोगुणसंभवः, पद्मत्वान्नाभीनालीकस्य पद्मस्वभावप्रयुक्तपरागमात्रं स्यादेव । रजस एव रजोमूर्तीनां चतुर्मुखानां संभवः स्यात् । रजःस्फुरणं विना न सर्गारम्भः संपद्येत । रजोगुणाभावेऽपि सन्त्येव नालीकरजांसि, येषां स्फुरणात्स्रष्टारः सृज्येरन् । २. ' भूयाद्भायत्स्वयम्भूमधुकरभुवनं...नालीकं नाभिपद्माकरभुवमुरु तन्नागशय्यस्य शौरेः ' 'गीर्वाणपूज्यं कमलजमधुपस्यास्पदं तत्पयोजम् ' इति श्रीशाङ्करानुभवः ॥

**रम्यावर्तद्युतिसहचरी ।** १. कान्त्यम्भःपूरपूर्णं नाभीसरः । निम्नत्वाद्गम्भीरत्वाच्च नाभेरुपर्यवयवेभ्यः प्रतिक्षणं प्रवहन्तो लावण्यौघाः नाभौ वेगेन पतन्ति । अतो लावण्यावर्ताः सततं तत्र परिदृश्यन्ते । रम्यावर्तानां नयनहारित्वाद्दिदृक्षा जायेतैव । भयमप्युत्पद्येतातिसमीपगमने । अतः परितो गमनम् । २. आवर्तत्वेऽपि नाशुभदुःखावर्तत्वम्, किं तु परमशुभरम्यावर्तत्वम् । तस्मादेतदभिगमनरूपावर्तने शुभमेव

स्यात् ॥

रङ्गनाथस्य नाभिः । १. नाथशब्दोऽत्र श्लिष्टतरः । नाभेरेव सर्वलोकैकनाथत्वं स्पष्टं भवति । 'त्रयो देवास्तुल्यास्त्रितयमिदमद्वैतमधिकं त्रिकादस्मात्तत्त्वं परमिति वितर्कान्विघटयन् । विभोर्नाभीपद्मो विधिशिवनिधानं भगवतस्तदन्यद्भ्रूभङ्गीपरवदिति सिद्धान्तयति नः ॥' इति श्रीभट्टारकाणां विचित्रो नाभ्यनुभवः प्रत्यभिज्ञाप्यते सर्वस्मात्परत्वबोधकेन विभुशब्दपर्यायेण नाथशब्देन । तिष्ठतु शारीरकप्रणेता वेदाचार्यः केशवपरत्वसिद्धान्तयिता । तिष्ठतु श्रीमल्लक्ष्मणमुनिः । इयं नाभिरेव प्रत्यक्षप्रदर्शनेन भगवत्परत्वं सिद्धान्तयति । एतदेकदेशभूतात्पद्माद्वेधस उत्पद्यमाना दृश्यन्ते । तत उत्पद्यन्ते सर्वे इतरेऽपि । २. विश्वस्यात्मभूतो भगवान् 'भुवनस्य नाभिः ।' विश्वनाभेस्तस्यापि मध्यस्था नाभिः । परममध्यस्थया निर्धार्य प्रदर्शितः सिद्धान्तः साधुरेव स्यात् ॥

श्रीवत्सेन प्रथितविभवं श्रीपदन्यासधन्यं
मध्यं बाह्वोर्मणिवररुचा रञ्जितं रङ्गधाम्नः ।
सान्द्रच्छायं तरुणतुलसीचित्रया वैजयन्त्या
सन्तापं मे शमयति धियश्चन्द्रिकोदारहारम् ॥६॥

रम्यावर्तद्युतिसहचरीत्युपरिभागात्पतल्लावण्यप्रवाहा व्यञ्जिताः । ततो वक्षस्थलं प्रति नीयेतैव भावुकं मनः । ऊर्ध्वारोहेण

गम्भीरविशालनाभीपर्यन्तप्रदेशपर्यटनेन च नितान्तश्रान्तं मनः भूयो विश्रमार्थि स्यादेव । अत एव वक्षःस्थले तत्सौक-र्यबाहुल्यं प्रदर्श्यते । आस्ते तत्र माता भर्तुर्वल्लभतया तत्प्राणे-श्वरी वात्सल्यनिर्भरा । सन्ति च तत्रास्मत्सजातीया असंख्या-श्चेतना मणिवर इव भगवतो हृद्या नित्या मुक्ताश्च ॥

**श्रीवत्सेन प्रथितविभवम्** । '१. लक्ष्मीपदलाक्षैकलाञ्छ-नम्' 'श्रीपदन्यासधन्यम्' इति च बिरुदाङ्कितत्वमास्तां नाम । क्रुद्धभृगुपदन्यासधन्यंमन्यत्वमेवास्य नितान्तशोभावहमिति व्य-ज्यते । अस्मत्सजातीयचेतनपदन्यासं यद्यप्यात्मनो धन्य-तावहं मन्यते भगवान्, नास्माभिस्तात्त्विकमपि प्रकाशतया वाच्यमिति गूढतया व्यञ्जनं भृगुपदताडितवृत्तान्तस्य । तत्ताड-नकृतचिन्हस्यैव लक्ष्मीपदकमलन्यासादपि भूयस्या बहुमत्या माननं व्यज्यते तत्प्रथमोपादानेन । २. भगवद्वक्षःस्थलनित्यवास-रसिका खलु श्रीस्तत्क्षान्तिसंवर्धनार्थम् । क्षान्तिकाष्ठापरीक्षैव कृता देवतापरत्वं जिज्ञासमानेन ब्रह्मपुत्रेणेश्वरकनिष्ठभ्रात्रा भृगुणा । तत्परीक्षोत्तीर्णत्वाद्भगवतस्तदेव सर्वोत्कृष्टबिरुदतया प्रथमं प्रशस्यते । श्रियाध्युषिते वक्षसि पादकठिनताडनरूपो महत्तमोऽपराधोऽपि न केवलं क्षान्तः, परं तु स एव निरतिश-यगुणत्वेन भोग्यतया भूषणतया च सततं हृदये निवृत्तिकथा-गन्धरहितं लाल्यते । श्रीसान्निध्यसिद्धभगवत्क्षमाया अनु-ष्ठानकाष्ठालक्षणप्रामाण्यं प्रथमं प्रदर्श्यतेऽस्मद्विश्वासहेतोः, निः-

संकोचं निःशङ्कं भृगुपदादपि कठोरतरस्य कुलिशकठिनस्यास्मन्मनसः संचरणसंपादनार्थं च। ३. मलिनः क्षामो द्विजो धमनिसन्ततः कुचेलः 'दोर्भ्यां पर्यग्रहीन्मुदा' 'पर्यङ्कस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा' इति स्वयंग्रहेण भगवता श्लिष्टो 'यद्दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि' इत्यात्मनो भगवत्परिष्वङ्गानर्हतामेव मेने। 'शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत्' इति भृगुपदताडितः स्वतल्पादवरुह्य वक्षोमात्रस्य भागवतपादरेणुपवित्रतायामनलंबुद्ध्या उत्तमाङ्गस्य शिरसोऽपि पवित्रतास्त्विति शिरसा तत्पादयोः प्रणम्य 'अद्याहं भगवल्लक्ष्म्या आसमेकान्तभाजनम्। वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः॥' इति खलु प्रणयवागुत्सृष्टा भगवता। ४. परत्वकाष्ठाप्रदर्शनं कृतं नाभीवर्णने। अनुपदमेव न तादृशपरत्वेन विभवप्रथा, किं तु नैच्यकाष्ठया क्षान्तिकाष्ठया च विस्तीर्णप्रसिद्धविभवम्। ५. 'श्रीवत्सोल्लासि' इति वक्षोऽनुभवः श्रीशंकराचार्याणाम्। पृथगेकेन श्लोकेन श्रीवत्सशोभानुभूयते तैः। 'श्रीवत्सः श्रीपतेः स श्रिय इव दयितो वत्स उच्चैः श्रियं नः।' इति वत्सभूतभक्तपदताडनाङ्के वत्से इव श्रियः स्नेह इत्यतिचारु प्रदर्श्यते तैः। श्रियो वत्सवात्प्रियत्वाच्छ्रीवत्स इति समाख्या। न केवलं भगवद्बहुमतः, स्वसमवेतकान्तवक्षस्ताडनेऽपि तच्चिन्हस्य तयापि वत्सवत्प्रीतिलालितत्वम्। 'श्रीरङ्गराजकमलापदलालितत्वम्' बहु मन्यन्ते श्रीभट्टपादाः। तावुभौ तु क्रुद्धभृगुपदताडनचिन्हं बहु मन्येते॥

**श्रीपदन्यासधन्यम्** । १. भृगुपदन्यासधन्यत्वमुक्तम् । इदानीं वल्लभाचरणन्यासधन्यत्वमुच्यते । भृगुपदन्यासधन्यत्वं तद्बुद्ध्या । श्रीपदन्यासधन्यत्वं तद्बुद्ध्यास्मद्बुद्ध्या च । तेनैव चिन्हेन वेदान्तैरपि तत्त्वचिन्तातरणं क्रियते । तच्चिन्हेनैव तत्परत्वनिर्णयः । यथा रघुपतिपदानि पुंसां धन्यत्वेन संकीर्त्यन्ते तद्वक्षः श्रीपदन्यासधन्यं भवतीति संकीर्त्यते । २. नायकपादाम्भोजं यया करकमललालितमभूत्, या नायकोरुद्वन्द्वमुपधानीकृत्य सुखं सुष्वाप, तस्या एव पादाम्भोजमादरेण स्ववक्षसि विन्यस्य भगवता बहु मन्यते । भगवत्पादाम्भोजलालनेनास्माभिरपि भगवद्वक्षसि नियतवासः संपाद्येतैव । तदेव प्रदर्श्यते मणिवररुचा रञ्जितमिति ॥

**मध्यं बाह्वोः** । १. विद्युल्लतावच्छोभमानलक्ष्मीकान्तिभूषितत्वादप्यतिसुन्दरबाहुमध्यस्थत्वं भूयः शोभावहमिति व्यज्यते । २. वक्षोदर्शने परिष्वङ्गाशा जायेतैव । अपराधचक्रवर्तिभिरस्माभिर्भीतभीतैर्न परिरम्भणे प्रयत्येत । तादृशसंकटे स्वयं परिरम्भेच्छां प्रदर्शयन्तावखिलप्रार्थनापारिजातौ बाहू दृष्टिपथं प्राप्य परिष्वङ्गप्रत्याशां जनयन्त इति व्यज्यते ॥

**मणिवररुचा रञ्जितं रङ्गधाम्नः** । १. श्रीपदन्यासेनापि न तादृशं रञ्जनं भगवतः, यादृशं मुक्तचेतनसंनिधिना । शुद्धचेतना एव नारीणामुत्तमवधूभूतात्स्त्रीरत्नादप्युत्कृष्टा मणिवराः ।

श्रीरत्नाज्जीवरत्नमुत्कृष्टमिव । नित्यवल्लभाया यन्नित्यवासस्थानं तदेव दीयते तदानीमेव मुक्तानामपि । 'त्वयि किंचित्समापन्ने- किं कार्यं सीतया मम' इति खलु तस्य बहुमानो नूतनेष्वा- श्रितेषु । २. यावच्चेतना न रक्षिताः सज्वरोऽकृतकृत्यश्च सः । यदा एकोऽपि चेतनो मुच्यते तदानीमेव तस्य तद्विषयचातु र्थिकज्वरनिवृत्तिस्तद्रक्षणप्रयुक्तचित्तरञ्जनं च । ३. यथाशेषा- णामस्माकं चित्तं रज्यते रङ्गधाम्ना, तथा मणिवरांशभूतैर- स्माभिस्तद्धृदयं रञ्जितं भवति । अस्माभिस्तत्समीपगमने तदु- पासने तच्चित्तं रञ्जितं भवति । ४. य आनन्दमयः सर्वानान- न्दयत्यन्येषां सर्वेषां य आनन्दहेतुः सोऽपि चेतनमोक्षा- त्पूर्वं दुःखयन्नेव तन्मोक्षेण तदागमनेन चानन्दितो भवति । अत एव तदतिशयाधायकत्वरूपशेषत्वस्यास्माकं संभवः । इतरथा कमतिशयं वयं तस्य निष्पादयेम । ५. यद्यपि महा- तेजस्वी रङ्गधामा, सोऽपि कौस्तुभरुचाधिकं शोभते । रक्षि- तचेतनज्योतींषि विशेषशोभाधायकानि ॥

**सान्द्रच्छायं तरुणतुलसीचित्रया वैजयन्त्या ।** शैत्यसु- खानुभवः । श्रान्त्यपक्रान्तिः । वैजयन्ती यद्यपि भूतमाला भवति, तत्संबन्धेनैव धीसन्ताप इति च 'वैजयन्त्या सन्ता- पम्' इत्यव्यवहितसहपाठेन द्योत्यते, तथापि भगवद्विभूषण- त्वेन तस्या एव पञ्चभूतमालाया अनुभवे तस्याः परमानुकूल्येन भोग्यत्वमेव । यदेव भगवत्पृथक्त्वेनानुभुतं तापकमभूत्तदेव

तद्भूषणत्वेन तद्विशेषणतैकस्वरूपेणानुभूयमानं तत्तापशमनं सञ्जातम् ॥

**सन्तापं मे शमयति धियः ।** १. बाह्यसन्तापो बाह्यशैत्यसामग्र्या निवर्त्येत । आन्तरोऽयं संतापः भगवद्धृदयप्रसक्तिं विनापरिहार्यः । तत्प्रसादश्च वर्णितसामग्रीसंपत्त्यैव संपाद्यः । २. अनुदिनं प्रत्यूषसमये उद्यन्तमादित्यं वीक्ष्य न वयं बाह्यान्धकारनिवृत्त्या बाह्यचक्षुःप्रचोदनेन तृप्यामः, किं तु त्वन्मण्डलान्तर्वर्तिपरमात्मानमान्तरतमोनिवृत्त्या धियो विकासयित्वा तत्प्रचोदनं प्रार्थयामहे इति खलु गायत्रीमन्त्रेण वदामः । धीसन्तापशान्तिरेवास्माभिरन्वेष्टव्या । ३. 'दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्तमानन्दमूर्तिमजहादतिदीर्घतापम्' इति खलु कुब्जाया भगवदाश्लेषेण सकलतापनिवृत्त्यनुभवः । ४. धियः संतापस्तापकविषयसङ्गादेव । तापके च रजस्तमसी । 'अश्रान्तसंसरणघर्मनिपीडितस्य श्रान्तस्य मे विषयभोगमरीचिकासु' इत्याचार्याः । अशुभविषयेभ्यो मनसः प्रत्याहरणे एव धीसंतापनिवृत्तिः । तद्वर्णनेन प्रत्याहाररूपयोगाङ्गनिष्पत्तिर्व्यज्यते । इन्द्रियाणां स्वविषयासंप्रयोगः प्रत्याहारः ॥

**चन्द्रिकोदारहारम् ।** तापनिवृत्तिवर्णने चन्द्रिकाप्रस्तावोऽतीव शोभनः । प्रसन्नभगवद्धृदयादेव चन्द्रमसां प्रसूतिः । हृदयप्रदेशवर्णने तदुत्पद्यमानचन्द्रिकाग्रहणं हृद्यम् । 'जगदाह्लादनो जज्ञे मनसस्तस्य चन्द्रमाः । परिपालयितव्येषु प्रसाद इव

मूर्तिमान् ॥' इति यादवाभ्युदये । विपश्चिद्भूतभगवद्धृदयसततसंसर्गाद्धारस्यापि चन्द्रिकोत्पादेन तद्दातृत्वरूपौदार्यमपि स्यादिति व्यज्यते । हारमुक्ताः चन्द्रिकाप्रभामुत्पादयन्ति । आरोक्ष्यमाणस्य योगस्य फलवत्त्वव्यञ्जनोपक्रमोऽपि सूच्यते हृदयदेशवर्णनप्रयुक्तोदारशब्देन । एतदेवानन्तरश्लोके पारिजातमिति, तदनन्तरश्लोके उदारनेत्रमिति च दृढीक्रियते । करिष्यमाणमत्युदारभुजवर्णनं सम्यगवतार्यते एतच्छ्लोकान्तस्थोदारशब्देन ॥

एकं लीलोपहितमितरं बाहुमाजानुलम्बं
प्राप्ता रङ्गेशयितुरखिलप्रार्थनापारिजातम् ।
दृप्ता सेयं दृढनियमिता रज्जुभिर्भूषणानां
चिन्ताहस्तिन्यनुभवति मे चित्रमालानयन्त्रम् ॥

मध्यं बाह्वोरित्यवतारितबाहुवर्णनम् । कथं प्रत्याहारसिद्धिः संभवेत् । हस्तिनी खलु मम चिन्ता । 'कलभचरणे लूतातन्तुः कथं निगडायते ।' 'स्वबलेन हन्त मनसो निवर्तनं बिसतन्तुनेव सुरदन्तियन्त्रणम्' इति च दुर्दान्तायाः कथं निरोधः । अतिचपला मम चिन्ता क्षणे क्षणे प्रवृद्धकामा स्त्री या हस्तिनीति व्यवह्रियते । यद्यपि सा विषयेभ्यः क्षणं प्रत्याह्रियेत पुनस्तानेव धावेत् । अतः कथं धारणसंभव इत्याशङ्कायां स्वबलेन धारणं खलु दुःसाधम्, भगवतो बलेन बद्धाहुभिर्बलादस्मन्मनो बद्ध्वा स्वस्मिन्धारणे को वा धारणप्रयासोऽस्माकम् ॥

एकं लीलोपहितम् । १. 'अयामः श्रीरङ्गशयितुरुपधानीकृतभुजम्' इति श्रीभट्टपादानामनुभवः प्रत्यभिज्ञाप्यते । २. न मायोपहितो बाहुः, किं तु लीलोपहित इति च व्यज्यते । ३. न तत्त्वतो निद्राति, नोपधानमपेक्षते, किं तु नाटयति निद्राम् । ४. प्रणतबहुफले एकैश्वर्ये स्थितोऽपि बाहुमेव लीलयोपधानीकरोति भक्तमनोरञ्जनार्थम् । को वा भावो भगवतो भुजस्य लीलोपधानीकरणे । 'भवार्तानां वक्त्रामृतसरसि मार्गः प्रदर्शितो भवति' स्वयं हस्तेन । यथाध्वपरिश्रान्तानामातपतप्तानां तृष्णाशमनार्थं मार्गसमीपवर्तितटाकमार्गं दर्शयितुं हस्तचिन्हवन्तो दारुस्तम्भा निवेश्यन्ते राज्यनिर्वाहकैस्तथा परमोदारः परमवत्सलो रङ्गराजः साक्षात्स्वहस्तेनैवोत्फुल्लपङ्कजतटाकमिव सर्वतापहरामृतसरोभूतं वक्त्रं स्पृष्ट्वा तत्प्रदर्शयति तापत्रयघर्मतप्तानां भविनाम् । किं च हस्तस्य 'वरदत्वं स्वयं वक्त्रेण संदर्शितं भवति ।' अर्चायां मौननियमाद्वक्त्रेण हस्तं स्पृष्ट्वा 'अयं वरदः' इति संदर्शयति । मुख्यार्थैकशब्देन दक्षिणहस्तोऽभिप्रेतः । अत एव दाक्षिण्याभिमुख्यं भवति ॥

इतरं बाहुमाजानुलम्बम् । जानुपर्यन्तं बाहुं प्रसार्य 'पादद्वन्द्वमिदं शरण्यमभयं भद्रं च वो हे जनाः' इति पादौ प्रदर्शयतीव । पूर्वमनुभूतमेव जानूर्ध्वगतया मनीषया पुनरप्यनुभूयते आजानुलम्बिभुजदर्शनेन । तत्प्रादिदर्शयिषितपादावप्यनुभूयेते । वृत्तस्याप्यनुभवस्य पुनरनुभवेन धारणं क्रियते ।

धारणं ह्यस्मिन्श्लोके प्रतिपिपादयिषितम् । बाहुच्छायासंवलिता जानुच्छाया द्विगुणसुभगा भवति ॥

**प्राप्ता रङ्गेशयितुः** । शयानो भगवान्निद्रातीति कृत्वा तद्बाहुसमीपं सौन्दर्यानुभवाय निर्विशङ्कं याता । 'सुप्तस्य मुखमवलोकयन्त्या' इति कामसूत्रोक्तवत्, 'निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्' इतिवच्च सुप्तभर्तृशोभानुबुभूषा सहजैव ॥

**अखिलप्रार्थनापारिजातम्** । १. अत्र वृक्षत्वरूपणं 'बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः' इति छायाप्रदानेन प्रसिद्धं शीतलोदाररक्षणमपि द्योतितं भवति । उपसन्नमात्रस्य काङ्क्षितदानमपि सूच्यते । २. केयमाखिलप्रार्थना । सर्वस्वप्रार्थना । दातुः सर्वस्वं प्रार्थ्यते । किं च भगवत्सर्वस्वम् । तत्परिष्वङ्गः । 'एष सर्वस्वभूतो मे परिष्वङ्गः' इति खलूक्तं तेन । तथैव 'धनं मे भूरि नाददत्' इत्युक्तप्रकारेण यस्मै कुचेलमुनये धनं भूरि वाभूरि वा न साक्षाद्दत्तम्, धानामुष्टिमोचनात्प्रागेव तस्मै सर्वस्वं दत्तम् 'दोर्भ्यां पर्यग्रहीन्मुदा' इत्युक्तसानन्दपरिरम्भणेन । यद्यपि 'दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने' इति वित्तविवित्सां प्रदर्शितवत्यै तुत्क्षामायै धनं भूरि कुचेलागमन एव दत्तम्, 'अयं हि परमो लाभ उत्तमश्लोकदर्शनम्' इति दर्शनमात्रं परमलाभं मन्वानस्य परिष्वङ्गदानं वाञ्छितादधिकमेव । यद्यपि कुचेलोऽपि

भार्याधनभागी वा तत्स्वामी वा भवति 'यस्यैते तस्य तद्धनम्' इति वचनेन, तद्धनमानुषङ्गिकमेव तस्य । तेनानुदिष्टत्वात्, पत्न्या एव प्रथमं संप्रदानीकृतत्वाच्च । अत्रापि 'अखिलप्रार्थनापारिजातम्' इत्युक्त्वानुपदमेव 'त्वद्बाहुभिर्मम दृढं परिरभ्यते धीः' इतिवत्स्वयं बाहुभ्यां बद्ध्वा परिरम्भणमेव फलतया प्रदर्श्यते ॥

दृप्ता । न केवलं प्रपत्त्यारोहे दृप्तता । निदिध्यासनारोहेऽपि दृप्तता, दृप्तस्वभावत्वात् ॥

सेयम् । या पूर्वं परमदुर्दान्ताभूत्सैवेयम् ॥

दृढनियमिता । १. बध्यते दृढं सर्वबन्धमोचनाय । भगवत्यनुप्रवेशो सर्वबन्धविगलनम् । २. 'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्' इत्याद्यर्जुनप्रश्ने 'असंशयं महाबाहो मनो दुर्निग्रहं चलम्' इत्यादिभगवत्प्रतिवचनम् । यन्मनो दृढं प्रमाथि तत्स्वकीयमपि महाबाहुनार्जुनेन दुर्निग्रहम् । भगवद्बाहुभ्यां त्वस्मदीयं मनो दृढं बद्ध्यते । मनसो दृढमेव बन्धनमुचितम् । ३. प्रत्याहृतस्य मनसो लक्ष्ये धारणं नाम योगाङ्गमत्र विवक्ष्यते । तच्च भगवता कार्यते । 'देशबन्धश्चित्तस्य धारणा' इति धारणालक्षणं योगसूत्रे । 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' इति स्वयंग्रहेण भगवत्परिष्वक्तस्य मनसस्तस्मिन्धारणं सुकरमेव । ४. धारणाध्यान-

समाधिसंघातस्य ‘ त्रयमेकत्र संयमः ’ इति संयमसंज्ञा । सोऽपि संयमः प्रत्यभिज्ञाप्यत इव नियमितशब्देन । अत्रैव हि संयमप्रारम्भः ॥

**रश्मिभिर्भूषणानाम्** । १. भूषणानां कान्तयः सूक्ष्माः स्युः । ताभिः कथं हस्तिनी बद्ध्येत । ‘ कलभचरणे लूतातन्तुः कथं निगडायते, ‘ बिसतन्तुनेव सुरदन्तियन्त्रणम् ’ इति तस्य दुःसाधताचार्यैरेव प्रदर्श्यते । बन्धनस्यैवासंभवे कथं दृढनियमनम् । चिन्ताहस्तिनी खल्वियम् । अतिसूक्ष्मं मनः । तद्वृत्तिभूतचिन्ता सूक्ष्मतरैव स्यात् । सौक्ष्म्यादेव तस्याः स्वैरगतिरतिद्रुतगतिः कुत्राप्यप्रतिहतगतिश्च । अतिसूक्ष्मायास्तस्यास्ततोऽपि सूक्ष्मतराभी रज्जुभिरेव बन्धनं स्यात्, न स्थूलाभिः । न हि सूची रथरज्जुभिर्बध्येत । अतः सूक्ष्मतराः कान्तयः सूक्ष्मां चिन्तां बद्धुं प्रभवेयुः । बद्धापि ततो गलनार्थमितस्ततो वलत इति ‘ वलति भुजयोः ’ इति वक्ष्यते । २. हस्तिनीसंज्ञिता स्त्री स्त्रीस्वभावाद्विचित्रभूषणकान्तिभिरेव संमोह्यैकत्र बध्येत । निरतिशयः खलु संमोहः स्त्रीणामाभरणेषु । भूषणलाभादूनं सर्वं सुखं तासाम् । भूषणैर्बन्धनं निगडनं च तासां परमभोग्यमेव । अत एवालानयन्त्रबन्धनस्याप्यनुभाव्यतोक्तिः ‘ अनुभवति ’ इति । ३. यद्यपि स्वबलेन मनसो बन्धनं दुःशकम्, भगवद्बलेन बन्धनं सुशकमेव ॥

**चिन्ताहस्तिन्यनुभवति मे** । ‘ आशागजेन्द्रानपि ’ इति

श्लेषेण मानसकल्पितगजेन्द्रान्दिग्गजांश्च वर्णयति भट्टबाणः। अत्र चिन्तैव हस्तिनी । हस्तिनीपदं च 'स्थूलाधरा स्थूलनितम्बबिम्बा स्थूलाङ्गुलिः स्थूलकुचा सुशीला । कामोत्सुका गाढरतिप्रिया च नितान्तभोक्त्री खलु हस्तिनी स्यात् ॥' इति लक्षितं स्त्रीजातिविशेषमप्याचष्टे । इभीसाम्यार्थं सर्वावयवस्थौल्यप्रदर्शनं लक्षणश्लोके ॥

चित्रमालानयन्त्रम् । १. 'सर्वाश्चर्यमयो देवः' किमस्य न चित्रं भवति । मदहस्तिनी भूषणरश्मिभिरालानयन्त्रे बद्धा । २. 'बध्वा गृहाण वृषशैलपतेर्दये मां त्वद्वारणं स्वयमनुग्रहश्रृङ्खलाभिः' इत्यादि स्मार्यते । ३. यन्त्रारूढानयोगिनः संसारिणो भ्रामयेद्देवेश्वरो मायया । भ्रामणार्थमेव तत्र यन्त्रारोपणम् । अत्र संसरणरूपभ्रमणात्यन्तिकनिवृत्तये स्वबाहुयन्त्रे वा तद्भूषणयन्त्रे वा बन्धः । न मायायन्त्रे बन्धः, किं तु मायातारयितृबाहुयन्त्रे ॥

साभिप्रायस्मितविकसितं चारु बिम्बाधरोष्ठं
दुःखापायप्रणयिनि जने दूरदत्ताभिमुख्यम् ।
कान्तं वक्त्रं कनकतिलकालंकृतं रङ्गभर्तुः
स्वान्ते गाढं विलगति मम स्वागतोदारनेत्रम् ॥

लीलोपहितबाह्वनुभवे वक्त्रानुभवोऽपि स्फोरितः । बाहुभ्यां दृढं परिरब्धालानयन्त्रे बद्धा तत्र वलिता धीस्तृषितैव स्यात् ।

वक्त्राभिख्यापानेन पिपासा शममेष्यति ॥

साभिप्रायस्मितविकासितम् । १. 'पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् । ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रोष्ठपर्यस्तरुचः स्मितस्य ॥' इति कुमारसंभवे । तत्रोष्ठस्मितयोर्विशिष्टानुभवः । इह तयोः सहपाठेऽपि पार्थक्यानुभवः समप्राधान्येन । भगवदभिप्रायोऽनुकूलो वा न वेति जिज्ञासोत्कटैव स्यात् । तदनुकूलत्वनिर्णयश्च ध्यानारम्भ एव कार्यते स्मितप्रदर्शनेन । २. 'पादादि यावद्धसितं गदाभृतः' इति श्रीशुकमुनयो भावनामार्गोपदेशे । पादावारभ्य हस्तपर्यन्तं वर्णयेदिति वा, यावद्गदाभृद्भावनया प्रसन्नो मन्दहासं प्रदर्शयेत्तावत्पर्यन्तं भावनां कुर्यादिति वा अर्थः स्यात् । कामं गदां बिभर्तु भाव्यमानो भगवान् । भावनाप्रीतो मन्दं हसेदेव । मन्दहासरूपस्मितमेव तदानुकूल्यद्योतकम् । तदनुकूलसंकल्पोदय एवास्माभिर्दिदृक्ष्यते । ३. अतिशयाधायकतैकरूपशेषजनसंनिधौ शेषिवक्त्रस्य विकासरूपातिशयप्राप्तिः । विकसितशब्देन शेषकारितशेष्यतिशयो व्यज्यते । ईदृशोऽतिशयोऽस्माभिराधीयते । अस्मदुत्सवेषु सर्वेषु पितेव खलु स परितुष्यति ॥

चारुबिम्बाधरोष्ठम् । १. अधरशीधुनाप्यायनं मनोरथीक्रियते । २. रक्ततां प्रदर्शयतीवोष्ठम् ॥

दुःखापायप्रणयिनि जने दूरदत्ताभिमुख्यम् । १. मा-

स्त्वहेतुकः प्रणयो मद्विषये। स्वदुःखापायमुद्दिश्यापि मयि प्रणयेनालम्। २. मास्तु मद्विषये प्रणय एव, स्वदुःखापाये प्रणयवांश्चेदलमिति च भगवदभिप्रायः। सोऽप्यभिप्रेतः स्वा-द्भगवदभिप्रायत्वेनाचार्यप्रयुक्तस्वाभिप्रायशब्देन। स्वदुःखापाय-मपि न स्पृहयन्ति प्रायेण जनाः। 'सुखयाति दुःखमित्यत्रोद-यस्व माम्' इत्युक्तरीत्या दुःखमेव सुखं मत्वा तत्र सज्जन्ते-ऽविवेकिनः। 'दुःखमेव सर्वं विवेकिनः' इति योगसूत्रम्। ३. यद्यपि वयं पराङ्मुखा गोविन्दे, सोऽस्मदागमनदिशि वि-वृत्तवदनोऽभिमुखीभूय 'पिता ते सार्वभौमस्त्वां दिदृक्षुरास्ते।' इत्युक्तप्रकारेणास्मदागमनप्रतीक्षो वर्तते। ४. यद्यपि वाग्बद्धा-र्चासमाधिनिर्बन्धेन, स्वाभाविकपूर्वभाषित्वनियमो न त्यज्यते परमदक्षिणेन। पूर्वभाषित्वव्रतभङ्गं तूर्णं परिजिहीर्षत्याश्रयि-जनोपसदनात्प्रागेवाभिमुखीभवनेन। यथाकथञ्चिदाश्रयिपूर्व-त्वं संपादितं स्यादिति। 'पूर्वभाषी च राघवः' 'स्मितपूर्वाभि-भाषी च।' यद्यप्युपसत्तृपूर्वत्वं संभाषणविषये राघवस्य, तस्मा-दपि पूर्वत्वं तत्स्मितस्येति भावः। अत एवात्रापि प्रथमं स्मितव-र्णनम्, अनन्तरमभिभाषणस्थाननिविष्टाभिमुख्यवर्णनम्॥

**कान्तम्**: १. दूरादेवाभिमुख्यं दत्वास्मान्कामयमानमे-वास्ते। कमितृत्वात्कान्तम्। दूरदत्ताभिमुख्यं कान्तमिति सहपाठेनैषोऽर्थो व्यज्यते। २. 'चन्द्रकान्ताननं रामम्' इति चन्द्रवत्कान्तमिति वा चन्द्रात्कान्तमिति वा स्यात्। तस्यापि

गन्धर्वराजप्रतिमस्य रामचन्द्रस्य चक्षुष्यमिदम् । चन्द्रकान्ता-द्रामाननादपि कान्ततरमिदम् । निरुपपदकान्तशब्देनासदृश-कान्तिमत् ॥

वक्त्रम् । वक्तीव स्वस्योत्कटामुत्कण्ठाम् । वक्तृ इदं वक्त्रम् । 'वाचं विनापि वदसीव मयि प्रसादम्' 'संभाषमाणमिव सर्ववशंवदेन मन्दस्मितेन मधुरेण च वीक्षणेन' इत्यादि स्मार्यते । लोकोत्तरनटस्य रङ्गनटस्य मुखाभिनयेनैव भाव-प्रदर्शनं सुलभमेव । अभिनयेनैव सर्वं वाक्कृत्यं निर्वहेत् । 'अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः' इति खलु नाट्य-ज्ञानां वचनकुशलता ॥

कनकतिलकालंकृतम् । १. हिरण्मयस्य पुरुषस्योत्तमा-ङ्गस्यानुरूपं भूषणम् । २. 'कनकसरितः' इति पादवर्णने, 'कनकतिलकालंकृतम्' इति मुखवर्णने । कनकेनोपक्रम्य कन-केनैवोपसंह्रियते । उत्तरश्लोकस्योपसंहारश्लोकत्वेऽपि मूर्धजानां कनकवर्णत्वानौचित्यात्तदुपश्लिष्टकनकमयकिरीटस्य विशेष्य-तया मुख्यत्वेन तत्र प्रदर्शनं क्रियते कनकमयत्ववर्णनप्रक्रमभ-ङ्गभीरुणा । ३. अत्र न पुण्ड्रग्रहणं क्रियते, 'त्रस्य ब्रह्मविदा-गसः' 'ब्रह्मविदपचारदूरगं पुरुषम्' इति ब्रह्मविदपचारभीरु-तया । भगवद्रामानुजदयापात्राणां केषांचिदपि तापो नोत्पाद्य इत्याचार्याणां मुख्योऽभिप्रायः । श्रीमच्छङ्कराचार्यास्तटस्थत्वा-न्निःशङ्कं भगवत ऊर्ध्वपुण्ड्रमन्वभूवन् 'भूयाद्भूत्यै विभूत्यै मम

भुवनपतेर्भ्रूलताद्वन्द्वमध्यादुत्थं तत्पुण्ड्रमूर्ध्वं जनिमरणतमःखण्डनं मण्डनं च' इति । श्रीमद्भट्टपादैरप्यनुभूतमूर्ध्वपुण्ड्रम् 'आयत्किरीटमलिकोल्लसदूर्ध्वपुण्ड्रम्' इति । विभागपूर्ववृत्तित्वाद्वा, सर्वेषामपि रामानुजीयानां स्वस्य निरसूयबहुमानविषयत्वनिश्चयेन वा ते निर्विशङ्कं पुण्ड्रानुभवं प्राचीकशन् ॥

**रङ्गभर्तुः** । अङ्गयानुरूप्यमङ्गानाम् । अयं भर्ता बुभूषत्युपसत्तृमनीषाणाम् । अस्य वक्त्रमपि कान्तं बुभूषति ॥

**स्वान्ते गाढं विलगति मम** । १. 'रामभूतं जगत्सर्वं रामे राज्यं प्रशासति' इति तत्पूर्वं विष्णुमयत्वेन शास्त्राद्विदितं जगत्तदानीं राममयमभूदिति तन्मयतापादनदक्षे रामे योगिनां रत्यातिशयः प्रख्याप्यते 'रमन्ते योगिनः स्वान्ते' इत्यादिनिर्वचनश्लोकेन । अस्मत्स्वान्ते तथा रमते रामरतिविषयो रामाराधितो भगवानिति स्वान्तशब्दप्रयोगेण प्रत्यभिज्ञाप्यत इव । २. स्वयंप्रहस्वभावत्वात्सख्यकरणे प्रथमोपसदनशीलत्वाच्च स्वयमेव गाढविलग्नं भवति । उपस्थेयैरुपास्थितत्वेऽतुला ह्रीः खलु तस्य भवति । ३. 'गाढालिङ्गनसङ्गपीडितमुखम्' 'आसत्तियोगादविरलितकपोलम्' इति गाढालिङ्गने मुखस्य गाढविलग्नत्वं स्वारसिकम् । तदेव व्यज्यते गाढशब्देन । ४. उपासनीय एवास्मानुपसृत्य गाढं विलगति 'रामो राज्यमुपासित्वा' इतिवत् । ५. शिथिलविलगने गलेदिति भिया दृढं विलगति । 'वलति भुजयोः' इति विगलनप्रयत्नबाहुल्यं सूच्यत इव । ६.

गाढविलग्नं च ध्यानं योगसप्तमाङ्गम् । तच्च भगवतैव निर्वर्त्यते । भगवता मनसि विलग्ने मनोऽपि तस्मिन्विलगेदेव । निरन्तरानिबिडसंयोगः संयुज्यमानयोरुभयोरपि नियतभावी, द्विनिष्ठत्वात्संयोगस्य । ७. जीवेशयोः सामानाधिकरण्यमवश्यं संपाद्यम् । वयं तत्समीपं न गच्छामः । अस्माभिस्तदेकाधिकरण्यं वा तेनास्मदेकाधिकरण्यं वा संपादनीयं सामानाधिकरण्यसिद्धये । वयं कदाप्यात्मानं भगवति नान्तर्भावयामः । वयं वयमेव स्वनिष्ठतया सदा पृथक्तिष्ठासामः । भगवन्निष्ठा न कदापि बुभूषामः । 'लोकनाथोऽपि भगवानहं बभूव' इति श्रीशठकोपमुनयः षष्ठशतकाद्वितीयगाथायां निरवधिककरुणया भगवान्स्वयमेवास्मदेकाधिकरण्यं निर्वर्तयतीति विस्मयं प्रादर्शयन् । भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिः सामान्नाधिकरण्यमिति लक्षणं वर्ण्यते श्रीमच्छङ्कराचार्यैः 'भिन्नप्रवृत्तिहेतुत्वं पदयोरेकवस्तुनि । वृत्तित्वं यत्तथैवैक्यं विभक्त्यन्तकयोस्तयोः ॥ सामानाधिकरण्यं तत्संप्रदायिभिरीरितम् ॥' इति ॥

स्वागतोदारनेत्रम् । १. ममेत्येतदत्राप्यन्वेति देहलीदीपन्यायेन । २. नेत्रशोभयैव मुखवर्णनमुपसंह्रियते । मुनिवाहनेरष्टमश्लोके नेत्रौदार्यानुभवो विशेषतः प्रादर्शि । सोऽप्यत्र प्रत्यभिज्ञाप्यते उदारशब्देन । ३. आसन्ना योगसिद्धिः । फलदानं भविष्यतीति सूच्यते उदारशब्देन । ४. उदारवीक्षणैः खलु

सेवारूपफलानुज्ञानं परमपदेऽपि । ५. नेत्रमुदारं स्वागतं प्रसूते । ६. 'ललाटे नाट्यरङ्गे' इति श्रीशाङ्करानुभवः । अभिनये मुखस्य प्रधानत्वान्मुखेङ्गितैर्भूयो भावप्रदर्शनं प्रदर्श्यतेऽस्मिन् श्लोके ॥

माल्यैरन्तःस्थिरपरिमलैर्वल्लभास्पर्शमान्यैः
कुप्यच्चोलीवचनकुटिलैः कुन्तलैः श्लिष्टमूले ।
रत्नापीडद्युतिशबलिते रङ्गभर्तुः किरीटे
राजन्वत्यः स्थितिमधिगता वृत्तयश्चेतसो मे ॥

इदानीं केशपाशश्लिष्टकिरीटवर्णनम् । 'हिरण्यकेशः' इति श्रुतिः । अपर्यनुयोज्या सा । केशानामत्यन्तकाष्ण्यमेव शोभनम् । तथैव श्रीपरकालादीनामनुभवः । तथैव श्रीशंकराचार्यैः 'मालालीवालिधाम्नः कुवलयकलिता श्रीपतेः कुन्तलाली कालिन्द्यारुह्य मूर्ध्नो गलति हरशिरः स्वर्धुनीस्पर्धया नु ।' इति काष्ण्यमवलम्ब्य विचित्रोल्लेखनम् । यथा श्रुतयो वा कवयो वा न कुप्येयुस्तथा वर्णनीयमस्माभिः । पूर्वार्धेन केशपाशवर्णनं विशेषणतया । किरीटस्य विशेष्यत्वेनैकेन पादेन वर्णनम् । वेलातीतपरिमलेनोपक्रान्तम् । स्थिरपरिमलैरेवोपसंह्रियते । स्थिरान्तःसुवासनैव प्राप्या योगसिद्धौ । 'स्नानार्द्रमुक्तेष्वधिधूपवासं विन्यस्तसायन्तनमल्लिकेषु । कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे रतिमङ्गनानाम् ॥' इति कामशास्त्ररीत्यापि भगव-

द्विषयकरतेस्तत्केशेषु चरमपर्वतावस्थापनं शोभनमेव ॥

**माल्यैरन्तःस्थिरपरिमलैः।** १. श्रुतिपरिमलस्यामर्यादं वेलातीतत्वम्। नीलामौलिमाल्यवासितपरिमलानामन्तःस्थिरत्वम्। २. अन्तःपरिमलैरन्तर्वासनाधीयेत। स्थिरान्तः परिमलान्यपेक्ष्यन्ते दुर्मोचोद्भटकर्मकोटिनिबिडदुर्वासनापनोदनाय। ३. यदि बहिर्दूरं प्रसरेयुर्वासनाः, गन्धवद्द्रव्यस्य सूक्ष्मावयवानामेव बहिर्निर्गमनात्कालक्रमेण विशीर्येत गन्धाश्रयं माल्यमेव। यद्यन्तरेव तिष्ठद्गन्धो न कदाचिदपि द्रव्यापायः शङ्क्येत। ४. भर्तृमात्रानुभाव्यः खलु पत्नीमाल्यगन्धः। तस्यान्तःस्थिरत्वमेवोचितम्। यद्यस्माभिः पुरुषोत्तमविषये प्राप्तव्यं न्याय्यं स्त्रीत्वं प्राप्येत, यदि च योगेनास्मन्मनीषा तन्मौलिबन्धान्तर्लीयेत तदा तस्यास्तदन्तर्गन्धपरिचयः स्यात्। स्थिरशब्देन चतुर्थपादे चेतोवृत्तिस्थितिकथनेन निरूप्यमाणस्य समाधेः स्थैर्थं सूच्यते। शुभवासनास्थैर्यमेवापेक्ष्यते ॥

**वल्लभास्पर्शमान्यैः।** १. अत्र गोदाभिप्रेता। यथा सा रङ्गभर्तुर्वल्लभा तथा वयमपि तन्मौलिमाल्यवासितभगवत्केशपाशपरिमलवासिताः प्रिया भूयास्म। रङ्गभर्तुरिति पदमपि श्लिष्टतरम। योगारूढाया मनीषाया अपि भर्ता भवति यथा गोदायाः। नववधूर्भूयान्मनीषेति मनोरथः। यद्यपि समस्तजगतां पितृत्वेन सकललोकमान्यस्य भगवत उत्तमाङ्गस्य मान्यत्वं निरतिशयम्, गोदामौलिमाल्यभरसंभरणेन तस्य भूयो

मान्यत्वम् । २. गोदामौलिस्पर्शमात्रान्माल्ये सौरभसंक्रान्तिः । ३. विलक्षणसौरभाधानार्थमेव गोदा स्वमौलौ प्रथमं क्षणमात्रं माल्यं बध्नाति । तदर्थमेव तन्मात्रातिक्रमः सह्यते तया । ४. तन्मौलिस्पर्शमात्रेऽपि तादृशो बहुमानो भर्तुः । ५. न धूपवासाद्यपेक्षा केशानाम्, सति पत्नीमौलिगन्धवासितमाल्ये । ६. परिमलरङ्ग इति प्रसिद्धपरिमलस्याप्यतिशयाधायकं पत्नीमौलिवासितं माल्यम् । परिमलरसिक इत्येव तस्य रसातिशयहेतोर्विचित्रवासनासंक्रान्तिः क्रियते वल्लभया पत्न्या । ७. 'तां स्पृष्ट्वा मामपि स्पृश' इति माल्यं प्रति वक्तीव भगवन्मौलिः । उभयत्र संबोध्यमानयोर्व्रातमाल्ययोर्गन्धवहत्वं समानम् ॥

कुप्यच्चोलीवचनकुटिलैः कुन्तलैः श्लिष्टमूले । १. चोलयुवतयः स्वकेशानां दैर्घ्येण कौटिल्येन च विस्मिता मुहुर्मुहुः स्वकेशविषयस्वविस्मयं प्रकटयन्ति कचभरं धरापर्यन्तमधः प्रसार्य साभिमानं सगर्वं शोषणेन, मज्जनकाले कावेरीसलिले दीर्घं प्रसारणेन च । तेषां केशसौन्दर्याभिमानः सूच्यते आचार्यैः संकल्पसूर्योदये कावेरीवर्णने 'खेलच्चोलवधूविधूतकवरीशैवालितामन्वहं पश्येम प्लवमानहंसमिथुनस्मेरां कवेरात्मजाम् ।' इति तत्केशाभिमानं वीक्ष्य कावेर्या हासः सूच्यते । एवं सोपहासं भाषत इव ताः कावेरी, 'मन्मध्ये मुक्तकेशं मज्जतां युष्माकं केशाभिमानो वृथा । कौटिल्यरूपकेशगुणे मन्मध्यस्थरङ्गना-

थस्य कुटिलकुन्तलैः सुकेशीनामपि युष्माकं केशपाशः न स्पर्धितुं शक्नुयात् । युष्माकं सगर्वकेशप्रसारणेन शैवालरहितत्वेन सुप्रसिद्धानि मत्सलिलानि वृथैव शैवालितानि ’ इति । भगवत्कुटिलकुन्तलैः स्वसमवेतयत्किञ्चित्पदार्थस्य तुलारोहे यदि तासां निर्बन्धः , सन्त्येव तासां कोपावसरप्रयुक्तानि कुटिलकुटिलानि वचनानि यानि भगवत्केशवक्रिमाणमप्यतिशयीरन्नित्याचार्या व्यञ्जयन्तीव । २. अत्यन्तं ‘ ऋजुः ’ भगवान्सौन्दर्यभूमविघटनभयात्केशमात्रे कौटिल्यं सहते । ३. जन्मसिद्धमौत्तराणां दाक्षिणात्यान्प्रति सावज्ञत्वमाचार्या अपि नातिवर्तन्त इति कैश्चिदुच्येत । चोळीति चोलदेशस्त्रियो विवक्षिता इति भाति । हंससंदेशे— ‘ याहि चोलान् ’ इति पूर्वश्लोके उक्त्वानन्तरश्लोके ‘ संध्यारागं सुरभिरजनीसंभवैरङ्गरागैः केशैर्ज्योत्स्नाकलहतिमिरं पालिकापीडगर्भैः । आबिभ्राणाः सरसिजदृशो हंसदोलाधिरोहा दाधास्यन्ते मदकलगिरस्तेषु नेत्रोत्सवं ते ॥ ’ इति चोलदेशरमणीविलाससौन्दर्यादि वर्णितम् । तत्रापि तत्केशकार्ष्ण्यसौन्दर्यं वर्ण्यते ॥

**रत्नापीडद्युतिशबलिते रङ्गभर्तुः किरीटे ।** १. प्रथमश्लोकारब्धज्योतिरनुभवस्यात्राप्युपसंहारेऽनुगतत्वं द्योत्यते रत्नशब्देन । २. चिन्तारत्नं रत्नद्युतिशबलितकिरीटेनाभिषिच्यते । ‘रत्नं समागच्छति काञ्चनेन ।’ ३. किरीटस्वर्णभासा संयुक्ताः केशाः श्रुत्युक्तहिरण्यकेशत्वमपि कथञ्चिदुपपादयन्ति ॥

राजन्वत्यः स्थितिमधिगता वृत्तयश्चेतसो मे। १. इतः पूर्वमराजकं तत एवामर्यादमभूच्चेतः। अन्यराजकं वा स्वातन्त्र्याबलम्बनेन स्वराजकं वाभूत्। इतस्ततो धावदेवासीत्। इदानीं सुराज्ञि रङ्गराजे चेतोवृत्तयो निरुद्धा भवन्ति। रङ्गराजे वयम् 'सुराजं भवमभिमनुमहे।' २. अत्र स्पष्टं चिन्तावृत्तिनिरोधरूपसमाधेर्ग्रहणमिति पूर्वमेवोक्तम्। ३. स च समाधिः संप्रज्ञातो विग्रहविषयत्वात्। 'योगेन नाथ शुभमाश्रयमात्मवन्तः सालम्बनेन परिचिन्त्य न यान्ति तृप्तिम्।' इति शुभाश्रयविषययोगस्य सविकल्पकत्वमुक्तमाचार्यैः। तदनन्तरश्लोके 'मग्नाश्त्रिसीमरहिते भवतः स्वरूपे' इति स्वरूपमज्जनं प्रदर्शितम्। तच्च निर्विकल्पकम्। तस्यापि कतिचिद्विशेषविशिष्टतैवेष्यते। न सर्वविशेषरहितता। स्थितिमधिगता इति वृत्तिस्थितिरूपनिरोधस्याप्यधिगम्यत्वं द्योत्यते। निरोधोऽपि ज्ञानविषयो भवति। न स्वरूपविषयकनिर्विकल्पसमाधावपि त्रिपुटीराहित्यम्। स्थितिः प्राप्यते, विषयीक्रियते चेत्यधिगतशब्देन बोध्यते। ४. 'चेतसो मे' इति निरोधवशीकृतचेतसि स्वकीयत्वाभिमानः। एवं भावनासाधके स्वस्मिन्नपि भावनापूर्तौ सत्तानुभवो द्योत्यते 'मे' इति योगोपसंहारेण। समाधौ ममापि भावमस्ति॥

पादाम्भोजं स्पृशति भजते रङ्गनाथस्य जङ्घां
ऊरुद्वन्द्वे विलगति शनैरूर्ध्वमभ्येति नाभिम्।

वक्षस्यास्ते वलति भुजयोर्मामिकेयं मनीषा
वक्त्राभिख्यां पिबति वहते वासनां मौलिबन्धे ॥

आरूढः समाधिप्रासादः । तत्तदवयवानुभवाहितशुभवासनाश्च संकलय्य वृत्ततत्तत्खण्डानुभवानुस्मरणपूर्वकमखण्डभगवद्विग्रहानुभवः प्रदर्श्यते । आरूढेनारूढसोपानपर्वणामुपरिदेशाद्वीक्षणं सुलभमेव । 'एकैकशोऽङ्गानि धियानुभावयेत्पादादि यावद्धसितं गदाभृतः । जितं जितं स्थानमपोह्य धारयेत्परं परं शुद्धयति धीर्यथा यथा ॥' इति श्रीशुकोक्तरीत्या एकैकावयवाहितसंस्काराः पुनरुद्बोध्य सहानुभूयन्ते । श्रीमच्छङ्कराचार्याः प्रत्यवयववर्णनं विस्तरेण कृत्वान्त्यश्लोके सर्वावयवविशिष्टाखण्डानुभवं प्रदर्शयन्ति 'आ पादादा च शीर्षाद्वपुरिदमनघं वैष्णवं यः स्वचित्ते धत्ते नित्यं निरस्ताखिलकलिकलुषे सन्ततान्तःप्रमोदः । जुह्वज्जिह्वाकृशानौ हरिचरितहविः स्तोत्रमन्त्रानुपाठैस्तत्पादाम्भोरुहाभ्यां सततमपि नमस्कुर्महे निर्मलाभ्याम् ॥' इति । भगवति तेषां निरवधिकरतिव्यञ्जकमिदं वर्णनमिति सुस्पष्टमेव । भागवतविषयरत्यैव सातिशया तेषां भगवद्विषयरतिः । यथा ब्रह्मविषयपराविद्यां प्रदर्शयन्ती प्रक्रान्ता मुण्डकोपनिषत् 'तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' इति ब्रह्मविदर्चनं विधत्ते, तथैव तेऽपि भगवत्पादादारभ्य स्तोत्रं रचयन्तः भागवतपादसततनमस्क्रिययैव तदुपसंजहुः । पुरुषार्थकाष्ठा तेषामपि संमतेव । अवयववर्णने भगवत्कर्तृक-

संयोजनादिव्यापाराः प्रायेण प्रदर्शिताः । पादाम्भोजस्य प्रतिफलनम्, नाभेः संप्रीणनम्, वक्षसो धीसन्तापशमनम्, बाह्वोर्यन्त्रनियमनम्, वक्त्रस्य स्वान्ते गाढं विलगनम्, मौलिबन्धस्य तदुपश्लिष्टकिरीटस्य वा चेतोवृत्तिस्थितिकर्तृत्वम्, इत्येतत्सर्वं निबिडसंयोगरूपयोगसंपादने भगवद्व्यापारस्य प्राथम्यमैकान्त्यं वा व्यञ्जयन्ति । जङ्घादर्शनेऽपि 'विवृणुते तनूं स्वाम्' इति स्वजङ्घाया दृग्विषयतापादनं भगवत्कर्तृकमेव यदि मुख्यं दर्शनं विवक्ष्येत । जङ्घानुधावनेन दिशं दिशं पतित्वा नितान्तश्रान्तं चेतः श्रमहरभगवदूरुद्वन्द्वे किञ्चित्कालमवशाद्विलीयेतैव । यथा दिवसपरिश्रमश्रान्ता अवशेनैव सति संपद्यामहे न विद्मश्च सति संपद्यामह इति । पूर्वं भगवद्व्यापारस्य प्रायिकत्वं सार्वत्रिकत्वं वा । इदानीमुपासकप्रतिव्यापारस्य सार्वत्रिकत्वम् । कृतम् च करिष्यति योगविमलीकृतस्य सत्त्वोत्तरत्वात् । पूर्वं भगवत्कारितसंयोजनानुभवमनु संजातरुचि स्वयमनुबुभूषति चेतः । योगारोह इति कामारोह एव । तच्छास्त्ररीतिश्च भूयोऽनुसृता । 'सुगन्धि मम नाथस्य' 'तस्याननं पद्मसमानगन्धि' इत्यादिवत्कान्तस्य सौगन्ध्यं निरतिशयभोग्यं कान्तायाः । तच्च प्रथमं प्रदर्शितम् । 'दृष्ट्वादर्शे मुखम्' इति कामसूत्रे नित्यकृत्यत्वेन वर्णनम् । युञ्जानायां मनीषायां नायकविग्रहदर्पणत्वारोपः । यदि नायक्येव शोभाविशेषान्नायकविग्रहप्रतिफलनसाधनमुकुरीभवति, तस्यां च नायकविग्रहस्य प्रतिफलनं भवेत्, ततोऽपि किं सुखकरं स्यात्तस्याः । 'प्रण-

यिनमिव प्राप्तं...प्रिया स्वमनन्वितं महति मुहुरापृष्टे मणिदर्पणे' इत्याद्यनुभवोऽप्यत्र स्मर्तव्यः । यदि च नायकविग्रहप्रातिफलनं पत्नीभिरेव लाययित्वा कार्येत, नवत्रध्वा मनीषाया भर्त्रवयवारोहकाङ्क्षिण्याः किं ततोऽपि प्रेयः स्यात् । नायिकया कान्तार्थवास्तुनिर्माणे 'मध्ये दीर्घिकां खानयेत्' इति कामसूत्रम् । तदपि प्रत्यभिज्ञाप्यते दीर्घिकाशब्देन । जलादर्शनेन दूरस्थितानस्मान्प्रति धावनमस्कामन्यत्र धावनत्यजनं चानुभूयेते । 'जननपदवीजाङ्घिकत्वं जहाति' इनि जन्मस्थलभूतपितृगृहमार्गजिगमिषां त्यजतीत्यपि व्यज्यते । मातापित्रोर्न स्मरति । पदवीपदेन तद्दिशं प्रति न चलतीति व्यज्यते । मन्मथोद्यानद्वारस्तम्भभूते ऊरुद्वन्द्वे विचित्रभोगानुभवः पूर्वमेव प्रादर्शि । 'कामं च यौवने' इति वात्स्यायनसूत्रम् । कामोद्यानप्रदर्शनं तत्र स्पष्टं प्रदर्शितम् । 'स्थाविरे धर्मं मोक्षं च' इत्यनन्तरं सूत्रम् । मोक्षः खल्वीप्स्यतेऽनया । तदनुरूपवृद्धतमत्वमप्यस्याश्मिन्नित्ययूनि । मनीषायाः कान्तासमाधिरितरश्लोकेषु तत्र तत्र प्रदर्शितैव । 'रतिमुभयप्रार्थना कुरुते' इति रतिविषयप्रार्थनापि स्मार्यतेऽखिलप्रार्थनाशब्देन । 'कृते प्रतिकृतं कुर्यात्' इति कामसूत्रे नायिकाविषयिका विधिः । 'दैवतं दैवतानाम्' इति पतिदेवतायाः पतिव्रताया मनीषायाः कान्त एवोत्तमं दैवतम् । तथैव स्पष्टमुच्यते वात्स्यायनैः । यत्कृतं नायकेन तत्सर्वं प्रतिकर्तव्यम् । तच्च क्रियते इत्यस्मिन्श्लोके प्रदर्शयिष्यते । कामसूत्रे कामकला अष्टाष्टकत्वेन विभ-

ज्यन्ते । तत्र च योगसंख्याद्रियते । इदं चात्रावधेयम् । ऐका-ग्र्यप्रधानत्वाद्योगस्य द्वन्द्वभूतमपि पादजङ्घमेकवन्निर्दिश्यते, पादाम्भोजमिति जङ्घेति च । द्वन्द्वानि योगं विघटयेयुरिति सुप्रसिद्धम् । कथं चोर्वोर्भुजयोश्च द्वन्द्वप्रदर्शनम् । ऊरुद्वन्द्वे द्वन्द्वप्रदर्शनं मङ्गलार्थमिति सोढव्यम । प्रविविक्षति नववधूर्मनीषा कामोद्यानम् । उद्वाहमङ्गलविधये तद्द्वारे कदलिकास्तम्भनिवेशे, कथमेक एव स्तम्भो निवेश्येत । एकः स्तम्भोऽमङ्गलाय । 'इदं द्वन्द्वमाचार्यस्य मङ्गलार्थं मृष्यताम् ।' आसनरूपयोगतार्तीयाङ्गं खलु तत्र प्रस्तूयते । कथमेकयासनसंभवः । उभयमप्यवश्यापेक्षितमासननिर्वृत्तये । तिस्रो देव्यस्तत्र स्वपन्ति । तदर्थमपि सिद्धं द्वन्द्वं न त्याज्यम् । 'स्थिरसुखमासनम्' इति लक्षितस्यासनस्यासनाधिक्यमनुकूलमेव । योगाङ्गानुकूलत्वाच्च द्वन्द्ववर्णनमूर्वोः । भुजद्वन्द्ववर्णनं तत्र प्रकृतधारणरूपयोगाङ्गस्य परमानुकूलमेव । बाहुद्वययन्त्रणेऽपि खल्वितस्ततो वलति । तद्द्वयं बिना कथं परिष्वङ्गलाभः । कुन्तलेषु माल्येषु च बहुत्वं न योगविरोधि । तच्छ्लिष्टकिरीटस्यैव तत्र विशेष्यत्वम् । कुन्तलबहुत्वं माल्यबहुत्वं च शुभवासनासंचयरूपयोगनिर्वर्त्यप्रयोजनस्य साधकमेव । यावन्तः कुन्तलास्तावन्तः शुभवासनाः । वासनाभार एव काङ्क्षित इति स्पष्टमुच्यते 'वहते वासनां मौलिबन्धे' इति । भाराधिक्य एव वहनपौष्कल्यम् ॥

**पादाम्भोजं स्पृशति ।** १. प्रतिफलनमनु तस्मिन्स्पृक्षति मनीषा । २. मुनिवाहनैर्भगवत्पादाम्भोजस्यान्तः प्रविश्य चित्तवशीकरणमनुभूयते । भगवतैव वैराग्यस्य कारितत्वात्तेषां तादृशं तीव्रमितरवैतृष्ण्यं समजनि । अन्तःप्रविश्य वशीकरणं प्रतिफलनकथनेन प्रत्यभिज्ञापितम् । वशीकृता च मनीषा तत्कामयमाना स्पृशति । ३. 'असमागतयोः प्रीतिलिङ्गद्योतनार्थं स्पृष्टकरूपालिङ्गनम्' इति कामसूत्रे । असमागतयोरिति पदस्य 'असंघटितपूर्वयोः संघटितयोः' इति व्याख्या तद्भाष्ये । प्रथमसंघटनारम्भभाविस्पृष्टकं स्पृशतीति प्रत्यभिज्ञाप्यत इव । ४. आदर्शप्रतिफलितं पश्चादायान्तं मनीषा पश्चात्स्पृशति । ५. 'स्वान्तसंक्रान्तबिम्बच्छायापत्त्या' इति भगवद्विग्रहस्य शुद्धचेतसि प्रतिबिम्बितत्वं श्रीमच्छङ्कराचार्या अनुभवन्ति । ६. योगोपायान्वयोपक्रमः स्पर्शशब्देन द्योत्यते । ७. आरोहेण प्रेप्सितस्य वस्तुनः प्रथममधोभागस्पर्शमात्रं संभवेत् । स्पर्श एव प्रथमं दुःसंपादः । वृत्तस्यापि प्रत्यक्षानुभवाल्लट्प्रयोगः । सार्वकालिको वा लट् । इतः परं सार्वकालिक एवानुभवः ॥

**भजते रङ्गनाथस्य जङ्घाम् ।** १. नाथोपज्ञं प्रवृत्तं सत्त्वसमदर्शनम् । स च प्रसिद्धो योगी । स च 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः ।' इति प्रत्यक्षेण सर्वं साक्षात्कुर्वन्तं योगीश्वरमेव प्रणमति । रङ्गनाथश्च योगीश्वरो रङ्गनाथ-

योगियोगविषयः। तन्नाम्नैवात्राखण्डयोगानुभवः। योगिभूताचार्यस्यापि स्मरणं भवति। २. दृशिनोपक्रम्य भजिनोपसंह्रियते। दृष्ट्वेत्युक्त्वा भजत इत्यनूद्यते। भजनरूपनिदिध्यासनस्य दर्शनतो भिन्नत्वात्, उभयोर्विशेषणविशेष्यभावः। भजनेन दर्शनविशेषणेऽतिशयाभावान्न्यूनतापादनाच्च, दर्शनेन भजनविशेषणे दर्शनसमानाकारत्वरूपवैशद्यलाभात्, दृष्ट्वेति भजनमेव लक्षितम्। विद्युपास्योर्वेदान्तेष्वव्यतिरेकेण प्रयोगो दृश्यते। कचिद्विदिनोपक्रम्योपासिनोपसंहरति। यथा 'यस्तद्वेद यत्स वेद स मयैतदुक्तः' इत्यत्र 'अनुम एतां भगवो देवतां शाधि यां देवतामुपास्से।' इति। कचिच्चोपास्तिनोपक्रम्य विदिनोपसंहरति। यथा 'मनो ब्रह्मेत्युपासीत' इत्यत्र 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' इति। तस्मात्सकृदुपदेशेष्वप्यावृत्तिसिद्धिः।' इति श्रीशंकराचार्या आवृत्त्यधिकरणभाष्ये॥

ऊरुद्वन्द्वे विलगति शनैः। १. हेयद्वन्द्वानि परित्यज्य शनैः शनैः शुभाश्रये निमज्जनम्। अनुभूयानुभूय मज्जनम्, न सहसा। पूर्वं हेयद्वन्द्वेषु विलग्नमासीत्। इदानीं शुभद्वन्द्वे विलीयते। स्वपन्ति तत्र तिस्रो देव्यः। तत्स्वापभङ्गभिया शनैरेव तत्प्रदेशसंचारः॥

शनैरूर्ध्वमभ्येति नाभिम्। नाभ्यावर्तस्यावर्तनरूपेण परितो गमनेनैवातिक्रमणसंभवः। परत्वैकान्तविषयायां नाभा-

वभिगमनशब्दः सुश्लिष्टः । स्वस्या अतिवेगवत्त्वेऽप्याश्चर्याणि सर्वाणि क्रमेण दृष्ट्वा शनैर्गमनम् । आवर्ते पतनभिया च शनैर्गमनम् । एकत्र प्रलीयमानान्यण्डानि । अन्यत्राण्डस्रष्टृब्रह्मणां सृष्टिः । बृहत्तमा ब्रह्मणो नाभिः । अभिगमनं विना नान्या गतिस्तद्विषये ॥

**वक्षस्यास्ते** । यथा 'वैकुण्ठे परे लोके आस्ते भगवान्' तथेयं मनीषा वैकुण्ठीयवक्षसि मणिवररूपेणास्ते । सार्वकालिकं चेदमासनं भवति । अभ्यागतस्य प्राधान्येनासनं न्याय्यम् । 'सर्वत्राभ्यागतो गुरुः' खलु । सर्वत्रेति ब्रह्मापि गृह्णाति । 'मर्यादानां च लोकस्य कर्ता कारयिता च सः' इति प्रसिद्धस्तदर्थमेवावतीर्णो धर्मसेतुरिमां मर्यादां नातिक्रामेत् । अस्मदागमने उत्सवः खलु प्रवर्त्यते भगवता । 'नित्यहृद्यो हि जीवः ॥'

**वलति भुजयोः** । १. 'तत इतः पश्येम लक्ष्मीसखम्' इति भट्टपादाः । तत इतो वलते भुजयोर्मध्ये । दक्षिणबाहुसमीपगमनेन मुखसमीपं गत्वा मुखाभिख्यानुभवः । वामबाहुगमने जानुपर्यन्तस्यानुभूतस्य पुनरनुभूयानुभूय धारणम्, धारणरूपयोगाङ्गस्य प्रकृतत्वात् । जानुसमीपं गत्वा पादाम्भोजमपि पुनः साक्षात्करोति । 'वलति' इति परस्मैपदप्रयोगोऽसाधुरिति केचित् । परस्मैपदेऽपि वलिधातोः प्रयोगो भूयो दृश्यते । 'दृष्टिरन्यतो न वलति' इति कादम्बरी ।

'स्विद्यति कूणति वेल्लति विवलति निमिषति विलोकयति तिर्यक्' इति काव्यप्रकाशे। इतस्ततो वलने स्वसन्तोषादपि भगवत्संतोषोऽधिकः । शेषी खलु सः। तस्यैवातिशयः। परस्य प्रयोजनाधिक्यं परस्मैपदद्योत्यम् ॥

**मामिकेयं मनीषा**। इदानीं योगरूपावयविनिष्पादनात्मती धन्या मनीषा इयमिति निर्दिश्य श्लाघार्हा। यथा श्रीवकुलभूषणैर्भगवत्प्रवणस्वमनःश्लाघा ॥

**वक्त्राभिख्यां पिबति**। ध्यानानुवादः । 'लोचनाभ्यां पिबन्निव' इतिवन्मनीषया पानम् । भावनारूपपानं खलु प्रक्रान्तम्। वलनतर्षिताया वदनकान्तिपानेन तृप्तिवृत्तिः ॥

**वहते वासनां मौलिबन्धे**। आ पीठान्मौलिपर्यन्तमित्यादि प्रमाणेनापादचूडमनुभूयैव कुवासनानिरसनम् । शुभवासनाश्च संचिताः। मौलिबन्धानुभवे स्थिरसौरभभारः। सर्वसुवासनाभरमिदानीं शिरसा वहते । स्वमौलिबन्धे वहत इत्यपि व्याख्यातुं शक्या पदावृत्त्या। मौलिर्बुद्धिस्थानम्। बुद्धिरेव शुभसंस्कारैर्वासितव्या। शुभवासनाया निरतिशयभारोऽपि न बुद्धेर्भाराय। प्रत्युत सुखायैव भवेत्। नान्यार्थं भारवहनं यथान्यैर्भारवाहिभिः, किं तु स्वार्थमेवेत्यात्मनेपदेन द्योत्यते। शुभवासनाभारो योगसिद्धिद्योतकः ॥

कान्तोदारैरयमिह भुजैः कङ्कणज्याकिणाङ्कै-
र्लक्ष्मीधाम्नः पृथुलपरिघैर्लक्षिताभीतिहेतिः ।
अग्रे किञ्चिद्भुजगशयनः स्वात्मनैवात्मनः सन्
मध्येरङ्गं मम च हृदये वर्तते सावरोधः ॥११॥

योगारोहस्य किं फलम् । ध्यातस्य भुजगशयनस्य ध्यातृहृदये नित्यसुखसंनिधानमेव । तिस्रः खलु प्रियाः शय्याः सावरोधस्य भगवतः । श्रुतीनां मौलयः, शेषः, विमलमनसां चित्तमिति । श्रुतिमौलयो नित्यसिद्धाः । शेषोऽपि नित्यसिद्धः । अत्र श्रीरङ्गे भगवदागमनात्पूर्वमेव सिद्धः शेषपीठः । एकमेवानवाप्तमाप्तव्यम । विद्वत्सेवाविमलं मम हृदयं पर्यङ्कीभूयाच्छेषवत् । पर्यङ्कीभवनरूपसेवैवाभिलष्यते । कथं शयानो भगवानग्रे आगत्य मद्धृदये वर्तिष्यते । तच्छयनमनपहाय तत्रापि वर्तितव्यम् । मद्धृदयेऽपि वर्तितव्यम् । कथमिदं घटेत । मन्मनोरथं सफलयितुं स्वात्मैव सन्नात्मन एव किञ्चिदग्र आगत्य उत्सवमूर्तिरूपेण रङ्गमध्ये, मद्धृदये च तिष्ठेत् ॥

कान्तोदारैरयमिह भुजैः कङ्कणज्याकिणाङ्कैर्लक्ष्मीधाम्नः पृथुलपरिघैर्लक्षिताभीतिहेतिः । कान्तोदारैरिति दातुः सौम्यताद्योतनम्, अकलङ्कपूर्णेन्दुसमाधिः स्यादिति । उदारत्वं नेत्रयोर्वर्णितम । भुजैरेव साक्षाद्दानम् । अभयदाता पाणिग्रहीता भुजः कान्त उदारश्च । कङ्कणं दीनानाथानामभय-

प्रदाननित्यव्रतसूचकम् । नूतनं वा मनीषोद्वाहेन । योगारूढानां ज्ञानिनां जनकादिवदभयं प्राप्तानां स्वनिमित्तभयाभावेऽप्यस्त्येव भूरि भगवन्निमित्तं भयम् । सन्ति लक्ष्म्यादयो उत्तमस्त्रियः । अस्ति च लक्ष्मीर्निरतिशया । बह्वपायास्पदमिदम् । तस्माद्भक्तभयनिवृत्तये हेत्यादिप्रदर्शनेन भयं निवर्त्यते । भये सति सिद्धस्य योगस्य विच्छेदः स्यात् । यथा योगविच्छेदे भयं प्रदर्श्यते श्रुत्या, भयोत्पादे योगो विच्छिद्येतैव । उभयोर्न सहभाव इति श्रुत्यभिप्रायः ॥

अग्रे किंचिद्भुजगशयनः स्वात्मनैवात्मनः सन् ।

१. भुजगशयनः स्वात्मनैवात्मनः किञ्चिदग्रे सन्नित्यन्वयः । 'शयानो याति सर्वतः' इति कठवल्लीकविः । शयान एव सर्वतो यातीति श्रुतिबोधितम् । शक्यं शयानस्यापि शयनमनुत्सृज्यैव स्वस्य किञ्चिदग्रे भूत्वा भक्तभयनिवृत्त्यर्थं तद्रक्षणार्थं च स्वाभिन्नेन पञ्चायुधभयमुद्रादिबिभ्रदुत्सवमूर्तिरूपेण मध्येरङ्गमवस्थातुम्, मत्समीपमप्यागत्य मद्धृदयेऽवस्थातुं च । शयानस्यैव सर्वतो गमनसमर्थस्य रङ्गमध्यं भूषयितुं मद्धृदयं प्रद्योतयितुं च स्वस्य किञ्चिदेवाग्रे आगमनं कियदित्याचार्या व्यञ्जयन्तीव । कठश्रुतिः श्रीरङ्गनाथविषयेवेत्याचार्यानुभवः । भुजगशयन इति स्वात्मनैवात्मनः किञ्चिदग्रे सन्निति च कठश्रुतिः प्रत्यभिज्ञाप्यत इव । २. 'न हि सुशिक्षितोऽपि नटवटुः स्वस्कन्धमारोढुं प्रभवेत्' इति प्रसिद्धो न्यायः । तदनु-

सारेण स्वस्यैव स्वाग्रे भवनमशक्यम्। अपूर्णासर्वशक्तविषयो न्यायो न पूर्णं सर्वशक्तं रङ्गनटं स्पृशेत्। 'इन्द्रो मायाभिः पुरुरूप ईयते' इतीच्छामात्रगृहीताभिमतोरुविग्रहः परमेश्वरो लौकिकन्यायमतिवर्तते। ३. 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥' इति श्रुतिः स्मार्यते॥

**मध्येरङ्गं मम च हृदये वर्तते।** १. यथोत्सवमूर्तिरूपेण भुजगशयनस्य स्वाग्र एवागत्यावस्थाने न कोऽपि संशयः, तथा तस्यैव मद्धृदये वर्तनमपि निःसंशयम्। 'नानुमानमतच्छब्दात्प्राणभृच्च' इत्यत्र यथा आनुमानप्रधानसंकीर्तनं प्रसिद्धत्वाद्दृष्टान्तार्थं भवति, तथात्राप्युत्सवमूर्तिसंकीर्तनमभिन्नत्वसत्यत्वप्रसिद्ध्या भुजगशयनस्यैव मद्धृदयवर्तनसत्यत्वे दृष्टान्ती-भवति। यथा मध्येरङ्गमुत्सवमूर्तिरूपेणोत्सवैः प्रहृष्यन्नेवास्ते, तथैव मम हृदये नित्योत्सवमासोत्सवाननुभूयादित्याशयः। २. यद्यप्युत्सवमूर्तेर्मूलमूर्त्यभेदोऽपि बुबोधयिषितः, मद्धृदयवर्तनापेक्षया तस्य प्रसिद्धत्वात्तस्य दृष्टान्तत्ववर्णनं शक्यम्। ३. प्रथमसंकीर्तितरङ्गान्तर्ज्योतिषो मम हृदये नित्यसंनिधानमेव भावनाफलम्। तच्च सिद्धं भवति भावुकहृदयमध्यवर्तनेन। ४. चिन्तारत्नं मच्चिन्तान्तःप्रविष्टं तत्र वर्तते। नेदमननुरूपम्। ५. 'यन्मूर्ध्नि मे श्रुतिशिरःसु च भाति' इत्युच्चनीचेषु निर्विशेषं वर्तते। अहो! किमिदमौदार्यम्। यथा सर्ववेदमूलभूतप्रण-

वरूपरङ्गमध्ये आस्ते तथा मद्धृदयेऽपि । ६. अन्तर्ज्योतिरिति 'मनोमयः प्राणशरीरः भारूपः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाकी अनादरः एष म आत्मान्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः सर्वगन्धः सर्वरसः एष म आत्मान्तर्हृदये ' इति शाण्डिल्यश्रुतिरपि प्रत्यभिज्ञाप्यत इत्युक्तम् । यस्य नाभौ गूढनिक्षिप्तं विश्वम् , यस्य नाभीसरसिजं नालीकं स्फुरितरजसा वेधसो निर्ममीते, यः सर्वलोकेभ्यो ज्यायान्स मम हृदयान्तः प्रविश्य वर्तत इत्यर्भकौकोवरणं परमानुग्रहकृत्यमित्यनुभूयते । अवाकी इत्युक्तं मौनमर्चासमाधौ सुश्लिष्टम् । निरतिशयबृहतो निरतिशयसूक्ष्मे मम हृदयेऽवस्थानम् । शाण्डिल्यश्रुतावस्मिन्श्लोके चानुभवसादृश्यं सुविशदम् । सर्वगन्धत्वमुभयत्र समानम् । गन्धस्याभ्यासो भवत्युभयत्र । मनोमय इति विमलमनसः करणत्वमुभयत्र । उभयत्रापि क्रतुरूपभावना क्रियते विधीयते च । सर्वरसविशेषणं चाभ्यस्तं रञ्जिताशेषचित्ते रसमये रतिमये रङ्गनाथे सुभगं समन्वितम् । रङ्ग एव सर्वरसानुभवसंभवः ' नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ' इति कविसार्वभौमाः । कवितार्किकसिंहाश्च ' न तच्छास्त्रं न सा विद्या नाटके यन्न विद्यते' इति । नाट्यं नाटकं च रङ्गे सुश्लिष्टे तन्नायकः सर्वरस एव । ७. पूर्वमन्तर्ज्योतिरुद्दिश्य तस्य रङ्गदृश्यतेजसाभेदो विहितः । अत्र रङ्गदृश्यतेजसो मद्धृदयान्तर्वर्तितेजसाभेदो विधीयते । उद्देश्यं पूर्वम् , विधेयं परमिति नियमः खलु ॥

**सावरोधः** । १. पत्नीभिः सहितभगवतः शय्याभूतम् । २. सकुटुम्ब आयातो नित्यवासाय । नेतो यायात् । ३. ब्रह्मपुरत्वेन प्रसिद्धे मम शरीरे दहरपुण्डरीकवेश्मनि मम हृदये ब्रह्मणो वर्तनमुचितमेव । ४. दिने दिने वयं भगवति शेमहे । स एव मुख्यं सुषुप्तिस्थानम् । कृते च प्रतिकर्तव्यम् । अनादिकालतोऽस्मत्पर्यङ्कभूतस्य भगवतोऽद्य प्रभृति वयं सर्वकालं तत्पर्यङ्कीभूयानृण्यं प्राप्नुयाम । ५. सावरोधः सपर्यङ्को यद्धृदयं पर्यङ्कीकुरुत इत्यपि भुजगशयन इत्यनेन सूच्यते । ६. 'सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्' इति श्रीशुकवचनमपि प्रत्यभिज्ञाप्यत इव । अवरुद्धो हृदि वर्तते । सावरोधशब्दावृत्त्या सान्तःपुरो हृद्यवरुध्यते । यदि शुश्रूषाक्षणे हृद्यवरुध्यते भावनान्तरं नियतं हृद्यवरुध्येत । ७. 'आत्मानमात्मन्यवरुध्य धीरो लब्धोपशान्तिर्विरमेत कृत्यात्' इत्युक्तप्रकारेण परमात्मन आत्मन्यवरोध एव योगस्य पूर्णता । हृद्यवरोधेनैवोपशान्तिलाभो योगप्रयत्नोपरमश्च । तत अवरोधेन योगोपसंहारोऽतीव हृद्य इति रसिकैर्विभाव्यम् ॥

रङ्गास्थाने रसिकमहिते रञ्जिताशेषचित्ते
　　विद्वत्सेवाविमलमनसा वेङ्कटेशेन क्लृप्तम् ।
अक्लेशेन प्रणिहितधियामारुरुक्षोरवस्थां
　　भक्तिं गाढां दिशति भगवद्ध्यानसोपानमेतत् ॥

रङ्गस्थाने रङ्गसभामण्टपे भगवन्नियमनेन भागवतनियमनेन वा रङ्गराजस्य पुरत एव तं श्रीरङ्गश्रृङ्गारं वीक्ष्य वीक्ष्यानुभूयानुभूय रचितमिदं सोपानमिति भाति । मातृकां पुरतोऽवस्थाप्य तत्पश्यन्त एव खलु शिल्पिन प्रतिमां निर्मिमते । रङ्गस्थाने क्लृप्तमिति स्पष्टमुक्तम् । रसिकमहिते इत्युक्तेस्तत्र रसिका विद्वांसः संमेलिता आसन्नित्यपि सूच्यते । सर्वे च रञ्जिता अभवन्निति रञ्जिताशेषचित्ते इत्यनेन सूच्यते । विद्वद्भिः स्वग्रन्थस्य रङ्गसभायां प्रथमपठनं सुप्रसिद्धम् । तद्बहुमत्यैव कृतार्थतां मन्यन्ते कवयः । चन्द्रिकान्यायामृतादिप्रणेतारः श्रीव्यासरायाचार्याः श्रीरङ्गचन्द्रमसः पुरतः स्वचन्द्रिकां प्रथमं प्रकटीचक्रुरित्यैतिह्यम् । तद्विषय एव तद्ग्रन्थप्रथमश्लोकः 'नमो नमोऽनन्तभक्तिमुक्तिदायिने शेषशायिने' इति । तदेव गाढभक्तिदातृत्वमत्रापि वर्ण्यते आचार्यैः । 'क्षीराब्धेर्मण्डलाद्भानोः··· रतिं गतो यतस्तस्माद्रङ्गमित्यभिधीयते ।' इति भगवतः श्रीरङ्गे निरतिशयरतिमत्त्वमुक्तम् । रतिं गतोऽत्र भगवानिति रङ्गम् । रङ्गराजविषयत्वाद्योगस्य राजयोगोऽयम् । क्लेशरहितश्च राजयोगः ॥

रसिकमहिते । १. रसिकैरलङ्कृतं रङ्गस्थानम् । २. रसिकैः पूजितं रङ्गस्थानम् । रङ्गस्थानमिति न वयं तत्र बहुमतिं कुर्याम । अपि तद्रोचते वैकुण्ठकथासुधारसिकानाम् ? त एव रसिकशब्देनाभिप्रेयन्ते । ओमित्युच्यते रसिकमहिते इति ।

३. न केवलं पुराणमहितम् । ४. भारतीनृत्तरङ्गं रङ्गम् ॥

**रञ्जिताशेषचित्ते** । १. आम्रान्पृष्टः कोविदारानाचष्टे इतिवदुपहास्यमिदम् । अपि रसिकचित्तरञ्जकं रङ्गमिति पृष्टम् । रसिकानां पूजास्थानमित्युत्तरितम् । परत्वात्पूजापदं भवेत् । न तावता रसिकरञ्जकत्वमुपपाद्येत । अत्रोत्तरम् । पण्डितादिपामरान्तानां सर्वेषां चित्तरञ्जनम् । २. रङ्गस्वभावाद्बहुधा भिन्नरुचेरशेषजनस्याद्वितीयं समाराधनम् ॥

**विद्वत्सेवाविमलमनसा** । निर्मलान्तःकरणेनैव योगसोपानकल्पनसंभवः । 'विद्वत्सेवाकतकनिकषैर्वीतपङ्काशयानाम्' इति 'महत्सेवां द्वारमाहुर्विमुक्तेः ।' इति च विद्वत्सेवया शुद्धान्तःकरणोऽहम् । सेवाशब्दः प्रणिपातपरिप्रश्नौ तल्लब्धोपदेशं चोपलक्षयति ॥

**वेङ्कटेशेन क्लृप्तम्** । १. वेङ्कट इति पापदाहकत्वं प्रसिद्धम् । विमलमनस्कत्वमुपपाद्यतेऽनेन नाम्ना । २. सोपानकल्पनकौशललाभः पूर्वमेवोक्तः । ३. 'तन्नामवहनं दास्यम्' इति वेङ्कटेशपरिचारकोऽयं वेङ्कटेशनामा इत्यपि व्यज्यते ॥

**अक्लेशेन** । १. अक्लेशेन क्लृप्तमित्यप्यन्वयः । नात्र वाचि वा अर्थे वोपदिष्टभावनामार्गे वा कियानपि क्लेशः । क्लेशलेशं विना सुश्लिष्टौ वागर्थौ दिव्यदम्पती इव । २. क्लेशान्विभज्य

तान्लक्षयित्वा क्लेशान्हापयाम इत्युद्घोष्य क्लिष्टमेव योगमार्गमुपदिशन्ति तच्छास्त्रिणः । तादृशक्लेशरहितो योगः प्रदर्शितोऽस्माभिः । ३. गानविषयश्लोकस्थाप्रयासशब्दः स्मार्यते । ४. प्रणिहितधियामवस्थामक्लेशेनारुरुक्षोरित्यन्वयः पूर्वमेव प्रदर्शितः ॥

**प्रणिहितधियामवस्थाम्** । समाधिभूमिम् ॥

**भक्तिं गाढां दिशतु** । योगफलत्वेन गाढभक्तिमेवाशास्महे । निबिडसंयोग एव फलम् । परभक्तिरूपयोगस्य परज्ञानपरमभक्तिफलपर्वाण्यपि गाढभक्तिकथनेन विवक्षितानि ॥

**भगवद्ध्यानसोपानमेतत्** । १. भाविता भावना मूर्तिमती पुरत आस्ते । सैवैतदिति पुरोवर्तित्वेन साक्षात्कृत्य निर्दिश्यते । २. भावनैव दृढं घनीभूता आरोहोपयोगिदृढसोपानं भवति । एतद्दृढसोपानसाहाय्येन समाधिगगनस्थलमारोढुं शक्यं भवति । ३. भगवद्विग्रहस्यैव सोपानत्वे, रङ्गवर्तित्वेन हृदयवर्तित्वेन वा एतच्छब्देन निर्दिश्येत । तस्य क्लृप्तत्वं सिद्धत्वात् । क्लृप्तम् , न कल्प्यम् । यथा रङ्गज्योतिरन्तर्ज्योतिः प्राप्यं साक्षात्कार्यम् , स्वयं साक्षात्कारसाधनाञ्जनं भवति, स्वसाक्षात्काराय स्वयमेव दिव्यं चक्षुरपि भवति, तथा योगेन तदारोहाय स्वदिव्यमूर्तिमेव सोपानतया विनियोजयति । तस्मिन् रङ्गनाथे कथं न रज्येतास्मच्चित्तम् ॥

'बालस्य साहसमिदं क्षमया सहध्वम्' इति प्रणिपत्य सविनयमभ्यर्थ्यते । 'सावद्यत्वे हि सोढुं प्रभवति हि सतामप्रकम्प्यानुकम्पा ।' प्रीयतां वासुदेवः, यस्य प्रसादे सर्वे प्रसीदेयुः ॥

सावरोधो रङ्गराजो वर्तते यद्धृदम्बुजे ।
निगमान्तगुरुश्रेष्ठः सन्निधत्तां स मे हृदि ॥

इत्थं गोपालदासेन वात्स्यवेङ्कटसूनुना ।
रचितं निगमान्तार्यस्तोत्रव्याख्यानमादरात् ॥



# शुद्धिपत्रिका ॥

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ७ | वक्ष्येत | उच्येत |
| ७ | १४ | काङ्क्षमाणानां | काङ्क्षतां |
| १३ | ४ | विश्वपारीणवृत्तिम् | विश्वपारीणवृत्ति |
| १६ | ५ | योगलक्ष्यम् | एकलक्ष्यम् |
| ४३ | ६ | चारुवृत्तौ | चारुवृत्ते |
| ४९ | १६ | सारसां | सरसां |
| ६५ | ११ | अनुप्रवेशो | अनुप्रवेशे |
| ६९ | ५ | अत्रो | अतो |
| ७२ | १९ | श्लोके | गाथायां |
| ७७ | १९ | भावं | भानं |
| ८० | १८ | विषयिका | विषयो |

